तर्क संग्रह

श्रीमदन्नंभट्टविरचितः—

# तर्कसंग्रहः

श्रीमद्रामाचरणभट्टाचार्य-
तर्कतीर्थ-न्यायाचार्य-
विरचितया

दीपिकाविवृत्या न्यायबोधिनीटिप्पण्या च समेतः



स्वायत्तीकृतसर्वाऽधिकारैर्विवृतिकारैः
प्रकाशितः ।



श्रीमदन्नंभट्टविरचितः—

# तर्कसंग्रहः



श्रीमद्रामाचरणभट्टाचार्य्य-तर्कतीर्थ-न्यायाचार्य्य-

विरचितया

ग्रन्थकृत्प्रणीततर्कदीपिकाया विवृत्या

श्रीमद्गोवर्धनमिश्रविरचित-न्यायबोधिन्याष्टिप्पण्या च समेतः



मुद्रापणादिविधौ श्रीमतः श्रीकृष्णवल्लभाचार्य्य-स्वामिनारायणस्य
न्यायशास्त्रिणः सहायतां प्राप्य स्वायत्तीकृतसर्वाऽधिकारै-
र्विवृतिकारैरेव सुसंस्कृतः प्रकाशितश्च ।

---

मूल्यं ॥।) ] सन् १९३४ जून [ द्वादशाणकाः

## ❀ काचिद्विज्ञप्तिः ❀

हन्त भोः ! सन्ति तावदनेके, ये पुनर्न्यायशास्त्रमहासागरनिमग्नाः सन्तः पारं नावलोकयन्ति, तेषां कर्णधारीभूतोऽयं **श्रीमदन्नम्भट्टविरचित**स्तर्कसंग्रहनामको ग्रन्थः। तस्य च दीपिकातरणी संक्षिप्तताभग्नतामासादयन्ती सर्वदा काठिन्यजलपरिपूर्णा, नितरामेव प्रायशः सर्वानुद्धर्त्तुमसमर्थाऽपीदानीं मन्निर्मितविस्तृतविवृतिलौहमालया संस्कृता सत्यनुकूलसारल्याऽनिलसुसङ्गता शीघ्रमेव समूलं समस्ताऽज्ञानपाथःसन्तानजनितानन्तसन्तापं विनाशयन्ती, सर्वानेव बुद्धिप्रतिभातटनिकटमानेष्यतीति मन्यते।

भाषापरिच्छेदकृतः श्रीमतो **'विश्वनाथ'**न्यायपञ्चाननात् **'गदाधरभट्टाचार्या'**दितो वाऽस्य ग्रन्थकर्त्तुः प्राचीनतां व्यवस्थापयतां मतं समीचीनं न वेति सन्दिहानैरस्माभिरुपेक्ष्यमाणं विचारयन्तु तावत् श्रीमन्तः प्रत्नतत्त्वविद एव ॥

परन्त्वयं दक्षिणदेशीयः परमकारुणिकः सर्वशास्त्रप्रकाशकतया मोक्षोपयोगितया च सविस्तरं ग्रन्थमिमं प्रणिनाय। ग्रन्थेऽस्मिन् सुचारुतया पदार्थसन्निवेशो विद्यार्थिनां परमोपकारितया प्रतिभातीति सर्वे जानन्ति, जानन्ति च सर्वे निरुक्तग्रन्थकृता नैयायिकसम्मतारम्भवादः स्पष्टतया प्रतिपादित इति। न च निरवयवयोः परमाण्वोः संयोग एव न सम्भवतीत्यारम्भवादो निर्युक्तिक इति वाच्यम्। तथा सत्यात्मा मनसा संयुज्यते इत्यादिप्रवादविरोधापत्तेः, आत्ममनसोरपि निरवयवत्वात्। नहि संयोगस्य निरवयववृत्तित्वे तस्याऽव्याप्यवृत्तित्वव्याघातः कल्पयितुं शक्यते, प्रलयावच्छेदेन दिगवच्छेदेन वा तदभावस्य तत्र सत्त्वेन तस्याऽव्याप्यवृत्तित्वाऽव्याघातादित्यास्तां विस्तरः ॥

धीरान् प्रणम्य बहुवारमहं सुसारान्,
प्राप्तप्रभूतयशसो विनिवेदयामि।
सन्तो मदीयवचनं यदि वा सदोषं,
क्षन्तव्यमेव कृतचिन्तनकैर्भवद्भिः ॥ १ ॥

इति **श्रीवामाचरणभट्टाचार्यस्य** ।

# समर्पणम्



भारतविख्याताऽशेषयशसां मदीयगुरुचरणानां

पण्डितप्रवराणां

"महामहोपाध्याय"श्रीवामाचरण" भट्टाचार्य-न्यायाचार्य-

महोदयानां

स्मृतपवित्रश्रीचरणसरोजेषु

परमादरेण

वाङ्मयमात्रं पुस्तकमिदं अकिञ्चित्करं

समर्पयति-

-श्रीवामाचरणभट्टाचार्यः ।

# विषयाऽनुक्रमणिका

❀ श्रीः ❀

# ❀ तर्कसंग्रहः ❀



## सविवृति-दीपिका-सुटिप्पणी-न्यायबोधिनी-समेतः



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

दीपिका

विश्वेश्वरं साम्बमूर्त्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ॥ १ ॥

विवृतिः

देवी दानवशोणितारुणकरैर्याऽऽश्वासयन्ती मुहुः
सद्यस्तापनिपूदनी भगवती भक्ताय मुक्तिं ददौ ।
देवः सेवत एव केवलमहो यां मातरं कातर-
स्तामेकां हरकामिनीमहरहः स्तौमि स्वमौलिस्थिताम् ॥ १॥

न्यायबोधिनी

अखिलागमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

---

आराध्य श्रीभवानीं श्री-वामाचरणशर्मणा ।
टिप्पणी न्यायबोधिन्यास्तन्यते ज्ञानदायिनी ॥ १ ॥

अखिलेति । सकलागमसञ्चरणशीलं श्रीकृष्णनामकं परं महः=प्रधानं तेज इत्यर्थः ।

दीपिका

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमित-

विवृतिः

हृद्यं वेदान्तजं ज्ञानं ज्ञात्वेशं द्वैतसन्ततिम् ।
जनयन्तं नमस्यामो गुरुपादवचोविदः ॥२॥
धर्मशास्त्रे प्रवीणो यो वरेण्यो धार्मिकेषु च ।
तातं दिगन्तयशसं तं प्रणम्य पुनः पुनः ॥३॥
तत्त्वं न्यायस्य विदुषा वामाचरणशर्मणा ।
दीपिकाविवृती रम्या सम्यगेव विधीयते ॥४॥

ग्रन्थारम्भे ग्रन्थसमाप्तिप्रतिबन्धकाऽनन्तविघ्ननिराकरणकारणीभूत-मिच्छामात्रसम्पादितविश्वविश्वेश्वरनमस्कारात्मकं मंगलं ग्रंथकृत्समाचरति स्म—विश्वेश्वरमिति । विश्वेषां = सृष्टिस्थितिप्रलयानां प्रयोजक-मित्यर्थः । न केवलमीश्वरस्य तत्कर्तृत्वमपि तु चैतन्यमय्या देव्या सहित-स्यैव तस्येत्याह—साम्बेति । अम्बया = विश्वजनन्या सह वर्तमाना-साम्बा, तादृशी मूर्त्तिः = स्वरूपं यस्य तादृशमित्यर्थः, गिरां गुरुम् बृहस्पतिञ्च, प्रणिपत्य = नमस्कृत्य, शिशुहिताम्=अनधीतन्यायशास्त्रहिताम् ॥ दीपिका-मिति । पदार्थप्रकाशकत्वादिति भावः । कुर्वेऽहमिति शेषः ॥

मूलोक्तमंगलफलं प्रदर्शयति—चिकीर्षितस्येति । कृतिसाध्यत्व-प्रकारकेच्छाविषयीभूतस्य 'ग्रन्थो मत्कृत्या साध्यतामि'त्याकारकेच्छा-विषयीभूतस्येति तु फलितार्थः । ग्रन्थस्य = तत्तद्वाक्यसमूहस्य । निर्विघ्न-परिसमाप्त्यर्थं = विघ्नध्वंसपूर्विका या चरमवाक्यलिखने 'सम्पूर्णमिदं कर्मे'त्याकारकप्रमात्मकज्ञानरूपा परिसमाप्तिः तत् फलकम् ।

एतेन—मंगलस्य समाप्तिकरणत्वं, विघ्नध्वंसस्य तद्व्यापारत्वं, समाप्तेस्तु तत्फलत्वं प्रदर्शितम् ॥

शिष्टेति—शिष्टानां = मनुव्यासादीनां आचारेण = यत्नेन अनुमिता=

दीपिका

वेदबोधितकर्त्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं ग्रन्थादौ प्रतिजानीते—निधायेति। ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति, मङ्गले कृतेऽपि कादम्बर्यादौ

विवृतिः

अनुमितिविषयीभूता या श्रुतिस्तद्बोधितकर्त्तव्यता यत्रेति व्युत्पत्त्या तादृशकर्त्तव्यताश्रयीभूतं यदिष्टदेवतानमस्कारस्वरूपं मंगलं = विघ्नध्वंसव्यापारकत्वविशिष्टं समाप्तिफलकं कर्म तदित्यर्थः। ननु मानसिकमंगलेनापि निर्विघ्नसमाप्तिसिद्धौ तन्निबन्धनमफलमित्याशंकायामाह—शिष्येति। शिष्या अपि मंगलं कुर्युरिति प्रदर्शनार्थमित्यर्थः, अन्यथाऽविदितगुरुकृतमंगलानां शिष्याणां मंगलाचरणाऽभावप्रसंगः स्यादिति ध्येयम्।

प्रतिजानीत इति। अव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारकशिष्यसमवेतबोधानुकूलव्यापारवान् मूलकार इत्यर्थः। निरुक्तप्रतिज्ञाया निष्फलत्वन्तु नाशंकनीयम्, शिष्याणां विशिष्य 'द्रव्यगुणे'त्यादिशब्दश्रवणेच्छाया एव तत्फलत्वसम्भवादिति वदन्ति। ननु यत्सत्त्वेऽवश्यं निर्विघ्नसमाप्तिः, असत्त्वे च न, तस्यैव तादृशसमाप्तिहेतुत्वं वाच्यम्, एवञ्च मंगलस्य समाप्तिकारणत्वमेव न सम्भवति, मंगलसत्त्वेऽपि समाप्त्यभावदर्शनात्, मंगलाऽभावेऽपि समाप्तिदर्शनाच्चेति मंगलाचरणमयुक्तमित्याशंकते-नन्विति॥ समाप्तिसाधनत्वम् = समाप्तिकारणत्वम्॥ कादम्बर्यादाविति। कादम्बर्यादिप्रणेतृपुरुषादावित्यर्थः, आदिपदात् लीलावत्यादि

न्यायबोधिनी

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति—निधायेति॥

---

'चिकीर्षितस्ये'त्यादिग्रन्थव्याख्या तु दीपिकाव्याख्यायां द्रष्टव्या॥

दीपिका

निर्विघ्नपरिसमाप्त्यदर्शनात्, मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनात्,—अन्वयव्यतिरेकव्यभिचारादितिचेत्—न, कादम्बर्यादौ विघ्नबाहुल्यात् समाप्त्यभावः, किरणावल्यादौ तु ग्रन्थाद् बहिरेव

विवृतिः

परिग्रहः । समाप्त्यदर्शनात् = समाप्त्यभावसत्त्वात्, तथा च तादृशप्रमारूपसमाप्तिविरहवति तादृशपुरुषादौ स्वानुकूलप्रयत्नवत्त्वसम्बन्धेन मङ्गलस्य विद्यमानतया 'कार्याऽभाववद्वृत्तिकारण'रूपाऽन्वयव्यभिचार इति भावः । व्यतिरेकव्यभिचारं प्रदर्शयति—मङ्गलाभावेऽपीति । स्वानुकूलप्रयत्नवत्त्वसम्बन्धेन मङ्गलाभाववत्यपीत्यर्थः । किरणावल्यादौ = तत्प्रणेतृपुरुषादौ । आदिपदात्—नास्तिकानां ग्रन्थान्तरपरिग्रहः । समाप्तिदर्शनात् = समाप्तेः सत्त्वात् । तथा च—तादृशसम्बन्धेन मङ्गलविरहवति किरणावल्यादिप्रणेतृपुरुषादौ समवायेन तादृशप्रमाज्ञानात्मकसमाप्तेः सत्त्वात् कारणाभाववद्वृत्तिकार्यरूपव्यतिरेकव्यभिचार इति भावः । अन्वयव्यतिरेकव्यभिचारादित्यस्य समाप्तिसाधनत्वं नास्तीत्यनेनाऽन्वयः ॥ समाधत्ते—नेति । प्रथमतः प्रथमोक्तमन्वयव्यभिचारं वारयति—कादम्बर्यादाविति । विघ्नबाहुल्यात् = समाप्तिप्रतिबन्धकीभूतविघ्नानामनन्तत्वात् ॥ समाप्त्यभाव इति । अस्याऽ'तो न व्यभिचार' इत्यनेन सम्बन्धः, तथा च समाप्तिप्रतिबन्धकयावद्विघ्नध्वंसजनककर्मण एव मङ्गलतया कादम्बर्यादिप्रणेतृपुरुषादौ च समाप्तिरूपकार्याऽभावसत्त्वेऽपि तादृशमङ्गलविरहान्न 'कार्याभाववद्वृत्तिकारण'रूपाऽन्वयव्यभिचार इति भावः ॥ व्यतिरेकव्यभिचारं वारयति—किरणावल्यादाविति । बहिरेव = जन्मान्तर एव ॥ मङ्गलं कृतमिति । तथा च—स्वानुकूलप्रयत्नवत्त्वोपलक्षितत्वसम्बन्धेन समाप्तिफलकमङ्गलस्य किरणावल्यादिप्रणेतृपुरुषादावभावविरहान्न 'कारणाभाववद्वृत्तिकार्यरूप'व्यतिरेकव्यभिचार इति भावः ॥

दीपिका

मङ्गलं कृतमतो न व्यभिचारः। ननु मङ्गलस्य कर्त्तव्यत्वे किं प्रमाणमिति चेन्न, शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्, "समाप्तिकामो मङ्गलमाचरेत" इति श्रुतेः, तथाहि 'मङ्गलं-वेदबोधित-कर्त्तव्यताकम्-अलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत्।

विवृतिः

केचित्तु—स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन मङ्गलस्य समाप्तिहेतुतया तादृशसम्बन्धेन जन्मान्तरकृतमङ्गलस्याऽपीह जन्मनि नास्तिकादिपुरुषादौ सत्त्वान्न व्यभिचार—इत्याहुस्तच्चिन्त्यम् ॥

ननु—मङ्गले निर्विघ्नपरिसमाप्तिकारणत्वस्य निश्चयेऽपि तस्य कृति-साध्यत्वस्याऽप्रामाणिकतया प्रेक्षावतां तत्र प्रवृत्तिरेव न स्यादित्याशये-नाऽऽशङ्कते—नन्विति। कर्तव्यत्वे = कृतिसाध्यत्वे॥ किं प्रमाण-मिति। तथा च न किमपि प्रमाणमस्तीति भावः॥ शङ्कां निरस्यति—नेति॥ शिष्टेति॥ शिष्टानां = मनुव्यासादीनाम्, आचारेण = प्रयत्नेन, अनुमिता = अनुमितिविषयत्वेनाऽभिप्रायविषयीभूता, या श्रुतिः = वक्ष्य-माणा, तस्या एव प्रमाणत्वात् = कर्तव्यताविषयकशाब्दबोधरूपप्रमितिजन-कत्वात्॥ एतेन—श्रुतेरनुमितिपूर्वमसिद्धत्वेऽपि न क्षतिः, तस्या विधेय-त्वेनाऽभिप्रायविषयतया पूर्वमज्ञातत्वस्याऽकिञ्चित्करत्वात्, तस्या विधेय-तावच्छेदकत्वे तु तज्ज्ञानस्याऽनुमितिपूर्वमपेक्षणीयतया पूर्वं तज्ज्ञानाऽभा-वात् कथमनुमितिरिति पूर्वपक्षो—निरस्तः॥

तादृशकर्तव्यताप्रमाणीभूतां श्रुतिं दर्शयति—समाप्तिकाम इति॥ ननूक्तश्रुतेरनुमितत्वं कुत इत्याकाङ्क्षायामाह—तथाहीति। मङ्गलमिति—पक्षनिर्देशः, वेदबोधितकर्तव्यताकत्वं—साध्यम्, तच्च वेदजन्यशाब्दबोध-विषयीभूतकृतिसाध्यतावत्त्वम्, वेदेन बोधिता = शाब्दबोधविषयीभूता कर्तव्यता = कृतिसाध्यता यत्रेति व्युत्पत्तेः॥ अलौकिकेति। अलौकिकः =

दीपिका

भोजनादौ व्यभिचारवारणाय—अलौकिकेति । रात्रिश्राद्धादौ व्यभिचारवारणाय-अविगीतेति । शिष्टपदं स्पष्टार्थं "न कुर्यान्निष्फलं कर्म" इति जलताडनादेरपि निषिद्धत्वादिति ।

विवृतिः

विधिप्रतिपाद्यत्वाभाववान् सन् इच्छादिप्रयोज्यो यस्तदन्यः = विधिबोधित इति यावत् । अविगीतः = अनिष्टाऽनुत्पादकः—यः शिष्टानां = फलसाधनांशे भ्रान्तिरहितानाम् आचारः = प्रयत्नविशेषः, तद्विषयत्वादित्यर्थः ॥ अस्य च निरुक्तकर्तव्यतासाधने हेतुत्वं बोध्यम्, 'दर्शादिवदि'ति दृष्टान्तानुसरणम्, तथा च यथा दर्शयागादयो निरुक्ताचारविषयत्वेन वेदबोधितकर्तव्यताऽऽश्रयीभूता भवन्ति तथा मङ्गलमपि—अलौकिकाऽविगीतशिष्टाचारविषयत्वेन वेदबोधितकर्तव्यताऽऽश्रयीभूतं भवत्येवेति भावः ॥ हेतुघटकतया प्रथमोपस्थिताऽलौकिकपदव्यावृत्तिमाह—भोजनादाविति । आदिपदात्—गमनादिपरिग्रहः ॥ व्यभिचारवारणायेति । तथा च—अलौकिकत्वस्य निरुक्ताचारविशेषणत्वाऽनुपादानेऽविगीतस्य = अनिष्टाऽनुत्पादकस्य शिष्टानां भोजनाचारस्य विषयत्वरूपहेतोर्भोजनादावपि सत्त्वेन तत्र च वेदबोधितकर्तव्यताकत्वरूपसाध्यविरहेण व्यभिचारोऽतोऽलौकिकपदम्, तदुपादाने तु भोजनाचारस्य लौकिकतया तस्य अलौकिकाऽविगीतशिष्टाचारपदेन धर्तुमशक्यत्वान्न व्यभिचार इति भावः ॥ रात्रिश्राद्धादाविति । आदिपदात्—विपरीतक्रमेणाऽनुष्ठीयमानयागान्तरपरिग्रहः ॥ व्यभिचारवारणायेति । तथाचाऽविगीतपदाऽनुक्तौ अलौकिकस्य शिष्टानां श्राद्धाचारस्य विषयतया रात्रिश्राद्धादावपि सत्त्वेन तत्र वेदबोधितकर्तव्यताकत्वरूपसाध्याभावात्—व्यभिचारः, अतोऽविगीतपदम्, तदुपादाने तु रात्रिश्राद्धस्य निषिद्धतया तदाचरणस्याऽनिष्टोत्पादकत्वेनाऽविगीतत्वाऽभावात् तत्र हेतुरेव नास्तीति कुतो व्यभिचार इति भावः ॥ स्पष्टार्थमिति ।

दीपिका

तर्क्यन्ते प्रतिपाद्यन्ते—तर्काः=द्रव्यादिसप्तपदार्थास्तेषां संग्रहः=संक्षेपेण स्वरूपकथनं,-क्रियते—इत्यर्थः। कस्मै प्रयोजनाय इत्यत आह—सुखबोधायेति। सुखेन=अनायासेन बोधः= पदार्थज्ञानं तस्मै—इत्यर्थः। ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वग्रन्थः क्रियत इत्यत आह—बालानामिति। तेषामतिविस्तृतत्वाद् बालानां बोधो न भवतीत्यर्थः। ग्रहणधारणपठनपटुर्बालः,

विवृतिः

अलौकिकाऽविगीतत्वविशेषणेनैवाऽऽचारस्य शिष्टीयत्वप्रदर्शनार्थमित्यर्थः॥ ननु—जलताडने व्यभिचारवारणाय 'शिष्ट'पदं सप्रयोजनकमिति तस्य स्पष्टार्थत्वाऽभिधानमसङ्गतमित्यत आह—न कुर्यान्निष्फलमिति। तथा च जलताडनस्यापि निषिद्धतया तदाचरणस्याऽलौकिकाऽविगीतत्वाऽभावादेव व्यभिचारवारणसंभवे शिष्टपदस्य सार्थक्यं न संभवत्येवेति भावः॥

ननु तर्कस्य मानसत्वव्याप्यजात्यवच्छिन्नस्याऽन्यादृशस्य वा यः संग्रहस्तस्यैव मूलकृत्प्रयत्नविषयत्वध्रौव्ये द्रव्यादिपदार्थनिरूपणमसङ्गतमित्यत आह—तर्क्यन्त इति। तथाचाऽनया व्युत्पत्त्या तर्कशब्दस्य द्रव्यादिसप्तपदार्थपरतया द्रव्यादिपदार्थनिरूपणस्य नाऽसङ्गतत्वं संभावनीयमित्याशयः॥ प्रतिपाद्यन्त इति। ज्ञानजनकव्यापारविषयीभूता भवन्तीत्यर्थः। प्रेक्षावत्प्रवृत्तये मूलाऽभिहितान् प्रयोजनाऽभिधेयसम्बन्धान् क्रमेण प्रदर्शयति—कस्मा इति। तथा च—द्रव्यादिपदार्थास्तावदभिधेयाः, द्रव्यत्वादिना तेषां ज्ञानं—प्रयोजनम्, प्रतिपाद्यप्रतिपादकभावः—सम्बन्धश्च निरुक्तश्लोकेन मूलकृता प्रतिपादित इति भावः॥ बालानामित्यत्र बालपदार्थं व्याचष्टे—ग्रहणेति। व्याकरणादिशास्त्राऽभिज्ञो न्यायशास्त्राऽनभिज्ञ इत्यर्थः, न तु स्तनंधय इति, स्तनंधयस्य ग्रहणधारणाऽयो-

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ।

दीपिका

न तु स्तनन्धयः । किं कृत्वा क्रियत इत्यत आह—निधायेति । विश्वेशं=जगन्नियन्तारं शिवं हृदि निधाय=नितरां स्थापयित्वा=सर्वदा तद्ध्यानपरो भूत्वेत्यर्थः । गुरूणां=विद्यागुरूणां वन्दनं=नमस्कारं विधाय=कृत्वेत्यर्थः ।

पदार्थान् विभजते—द्रव्येति । पदस्यार्थः=पदार्थ इति व्युत्पत्त्या 'अभिधेयत्वं' पदार्थसामान्यलक्षणम् लभ्यते ।

विवृतिः

यत्वादिति हृदयम् ॥ विद्यागुरुनमस्कारस्यैव प्रकृतोपयोगितयाऽऽह—गुरूणामिति ॥ तद्ध्यानपर इति । तथा च—सर्वकालीनमनःकरणकविश्वनाथध्यानाऽनन्तरकालीनो यो विद्यागुरुनमस्काराऽनन्तरकालीनो द्रव्यादिपदार्थज्ञानाऽनुकूलव्यापारः स मूलकृत्प्रयत्नविषय इत्येवं निरुक्तश्लोकजन्यबोधः पर्यवसित इति भावः ॥

मूले—सप्तपदार्था इति । नच—द्रव्यादीनामानन्त्यात् कथं तेषु सप्तत्वसंभव इति—वाच्यम् । सप्तपदार्था—इत्यनेन द्रव्यत्वगुणत्वादिपदार्थविभाजकधर्माणामेव सप्तत्वेनाऽभिहितत्वात्, तत्र च सप्तत्वस्याऽबाधादिति ध्येयम् ॥

पदार्थान् विभजत इति । द्रव्यत्वादयो ये विरुद्धाः पदार्थत्वव्याप्यधर्मास्तत्तदवच्छिन्नस्य पदार्थत्वविशिष्टस्य द्रव्यादिपदार्थस्य यज्ज्ञानं तज्जनकव्यापारानुकूलकृत्याश्रयो मूलकार इत्यर्थः ॥ विभागोपयुक्तसामान्यलक्षणाऽभिधानेन मूलस्य न्यूनतां परिहरति—पदस्यार्थ इति । पदार्थः=

न्यायबोधिनी

अथ पदार्थान्विभजते—द्रव्येति । तत्र सप्तग्रहणं 'पदार्थत्वं—

दीपिका

ननु विभागादेव सप्तत्वे लब्धे सप्तग्रहणं किमर्थमिति चेन्न।

विवृतिः

अभिधेयः॥ लक्ष्यत इति॥ ननु—यद्यभिधेयत्वं पदार्थसामान्यलक्षणं तदा तल्लक्ष्यतावच्छेदकस्य पदार्थत्वस्याऽपि तदात्मकतया लक्षण-लक्ष्यतावच्छेदकयोरैक्यप्रसङ्गः, नच—तयोरैक्ये का क्षतिरिति—वाच्यम्, व्यवहारादिसाधकाऽनुमानप्रयोजकस्य पक्षधर्मतामात्रबोधकस्योपनयस्याऽनुत्थानाऽऽपत्तेः, लक्ष्यतावच्छेदकाऽभिधेयत्वावच्छिन्नेऽभिधेयत्वात्मकलक्षणरूपहेतोरन्वयस्याऽव्युत्पन्नत्वादिति चेन्न। द्रव्यत्वाद्यन्यतमस्यैव लक्ष्यतावच्छेदकत्वेनाऽऽरोपात्। यद्वा—शक्तिसम्बन्धेन पदविशिष्टत्वमेव पदार्थत्वम्, एवं च पदस्यैव लक्ष्यतावच्छेदकतया तद्भिन्नस्य शब्दशक्यत्वस्य लक्षणत्वे नाऽनुपपत्तिगन्धोऽपीति—ध्येयम्॥

विभागादेवेति। पदार्थत्वव्याप्येन परस्परविरुद्धद्रव्यत्वादिना धर्मेण द्रव्यादेर्ज्ञानजनकात् 'द्रव्यं' 'गुण' इत्याद्याकारकशब्दादेवेत्यर्थः। अधि-

न्यायबोधिनी

द्रव्यादिसप्तान्यतमत्वव्याप्यमिति' व्याप्तिलाभाय। ननु—शक्तिपदार्थस्याष्टमस्य सत्त्वात्कथं सप्तैवेति, तथा हि—वह्निसंयुक्तेन्धनादौ सत्यपि मणिसंयोगे दाहो न जायते, तच्छून्येन तु जायते, अतो मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यत इति—कल्प्यते। तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेन्न।

---

व्याप्तिलाभायेति। यत्र यत्र पदार्थत्वं तत्र द्रव्यादिसप्तान्यतमत्वमित्याकारकव्याप्तिलाभायेत्यर्थः।

तच्छून्येनेति। मण्यभाववतेन्धनेनेति शेषः, अस्य च 'जायते दाह' इति पूर्वेणान्वयः। प्रतिबन्धकत्वेनेति। दाहकारणतावान् योऽभावो मण्यभावस्तत—

दीपिका

अधिकसंख्याव्यवच्छेदार्थत्वात् । नन्वतिरिक्तः पदार्थः प्रमितो, न वा ? नाऽऽद्यः, प्रमितस्य निषेधायोगात् । नाऽन्त्यः, प्रतियोगि-

विवृतिः

केति । अधिका = सप्तत्वातिरिक्ता नवत्वादिसङ्ख्या, तस्या यो व्यवच्छेदः = विरहः, तत्प्रयोजनकत्वादित्यर्थः ॥ द्रव्यादिसप्तपदार्थातिरिक्तवस्तुनः सत्त्वेऽधिकसङ्ख्याव्यवच्छेदो न संभवति, असत्त्वे चाऽलीकाऽभावाऽनभ्युपगमेन तादृशव्यवच्छेदस्याऽसंभव इति सप्तग्रहणमसङ्गतमेवेत्याशयेनाऽऽशङ्कते—नन्विति । अतिरिक्तः पदार्थः = द्रव्यादिसप्तपदार्थाऽतिरिक्तः पदार्थः । नच-तादृशातिरिक्तत्वस्य नैयायिकमतेऽप्रसिद्धतया तद्विशिष्टस्य पक्षत्वमेव न संभवति, उभयवाद्यसिद्धत्वादिति—वाच्यम् । द्रव्याद्यतिरिक्तत्वेन पराभिमतपदार्थस्यैव पक्षत्वेनाऽभिहितत्वादिति विभावनीयम् ॥ प्रमितो न वेति । विषयतासम्बन्धेन प्रमितिमान्, तेन सम्बन्धेन तदभाववान् वेत्यर्थः । अतएव—'प्रतियोगिप्रमितिं विने' त्याद्युत्तरग्रन्थोऽपि सङ्गच्छते, अन्यथा—प्रमितत्वाऽभावस्य प्रमितभेदस्य वा विप्रतिपत्तिकोटित्वे प्रमितेस्तत्तदभावाऽप्रतियोगितया 'प्रतियोगिप्रमितिं विने'त्याद्यभिधानमसङ्गतं स्यादित्यवधेयम् । इदमपि वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितावच्छेदकत्वमतेन बोध्यम् ॥ नाऽऽद्य इति । 'अतिरिक्तः पदार्थः प्रमित' इति प्रथमः पक्षो न स्वीकर्तुं शक्य इत्यर्थः । कुतस्तत्पक्षो न स्वीकर्तव्य इत्याकाङ्क्षायामाह-प्रमितस्येति । विषयतया यथार्थज्ञानवतो वस्तुन इत्यर्थः ॥ निषेधाऽयोगादिति । यथार्थज्ञानविषयताया एव वस्तुसत्त्वाऽनियामकत्वादिति भावः ॥ नान्त्य इति । 'अतिरिक्तः पदार्थः प्रमितत्वाऽभाववानि'ति-द्वितीयपक्षो न स्वीकर्तुं शक्य इत्यर्थः । कथं तस्याऽस्वीकार

न्यायबोधिनी

मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमव-

दीपिका

प्रमितिं विना निषेधानुपपत्तेरिति चेन्न। 'पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यम्' इति व्यवच्छेदार्थत्वात्। ननु सप्तान्यतमत्वं= सप्तभिन्नभिन्नत्वम्, एवञ्च सप्तभिन्नस्याप्रसिद्धत्वात् सप्तान्यतमत्वं

विवृतिः

इत्याकाङ्क्षायामाह—निषेधाऽनुपपत्तेरिति। गगनकुसुमाऽभाववत् अलीकप्रतियोगिकाऽभावस्याऽनभ्युपगमादिति भावः॥

उत्तरयति—नेति। पदार्थत्वं= शब्दशक्यत्वम्, तत्र द्रव्यादिसप्तान्यतमत्वव्याप्यत्वं च = तादृशपदार्थत्वसमानाधिकरणाभावाऽप्रतियोगिद्रव्यादिसप्तान्यतमत्ववद्वृत्तित्वम्, अन्यादृशस्य व्याप्यत्वस्य वक्तुमशक्यत्वात्॥

केचित्तु—वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितावच्छेदकत्वमते स्वाऽभाववद्वृत्तित्वसम्बन्धेन तादृशान्यतमत्वाऽभाववत्त्वमेव पदार्थत्वे द्रव्यादिसप्तान्यतमत्वव्याप्यत्वम्, तादृशसम्बन्धस्य निरुक्तान्यतमत्वव्यधिकरणसम्बन्धतया तेन सम्बन्धेन तदभावस्य केवलान्वयित्वादित्याहुः॥

इति व्यवच्छेदार्थत्वादिति। एवंभूतो यो व्याप्तिनिश्चयस्तस्यैव लक्षणया पूर्वोक्तव्यवच्छेदशब्दस्याऽर्थत्वसंभवादित्यर्थः, तथा च न सप्तग्रहणमनर्थकमिति—हृदयम्। अन्यतमत्वं—नाऽखण्डोपाधिः, तस्याऽप-

न्यायबोधिनी

धानासमवधानाभ्यामनन्तशक्तितद्ध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वात्, तस्मात्सप्तैवेति सिद्धम्॥

---

प्रतियोगित्वेनेत्यर्थः। मणिरूपप्रतिबन्धकसमवधानान्न दाहः, तादृशमण्यभावदशायाञ्च दाह इति भावः। सिद्धमिति। गुणवत्वात् क्रियावत्वाच्च द्रव्यत्वं सिद्धं= निश्चितमित्यर्थः॥

**तत्र-द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि-नवव॥**

दीपिका

कथम् इति चेन्न । 'द्रव्यादिसप्तान्यतमत्वं–द्रव्यादिभेदसप्तकाभाववत्त्वम्' इति तदर्थत्वात् । एवमग्रेऽपि द्रष्टव्यम् ।

द्रव्यं विभजते—तत्रेति । द्रव्यादिमध्ये द्रव्याणि-नवैवेत्यन्वयः । कानि तानि इत्यत आह–पृथिवीत्यादि ।

विवृतिः

सिद्धान्तकवलितत्वात्, अपि तु भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वमित्याशयेन शङ्कते—नन्विति ॥ सप्तभिन्नस्याऽप्रसिद्धत्वादिति । अष्टमादिपदार्थस्याऽनभ्युपगमादिति भावः ॥ अन्यादृशान्यतमत्वमभिप्रेत्य समाधत्तेनेति ॥ तदर्थत्वात् = तादृशान्यतमत्वव्याप्यत्वघटकाऽन्यतमत्वशब्दस्याऽर्थत्वात् । तथा च द्रव्याद्येकैकभेदस्यैकैकप्रसिद्धस्याऽभाववत्ताया द्रव्यादावेव प्रसिद्धत्वात् नाऽन्यतमत्वमप्रसिद्धमितिभावः ॥ अग्रेऽपि = नवैवेत्याद्युत्तरग्रन्थेऽपि ॥ द्रष्टव्यमिति । निरुक्तक्रमेण नवादिग्रहणं समर्थनीयमित्यर्थः ॥

विभजते–इत्यस्य पूर्ववदर्थो बोध्यः । विभागोपयुक्तं सामान्यलक्षणं स्वयमेवाऽग्रे दर्शयिष्यतीति न मूलस्य न्यूनत्वमाशङ्कनीयम् । द्रव्यादिमध्ये = द्रव्यादिपदार्थमध्ये । अत्राऽपि पृथिवीत्वादावेव नवत्वसङ्ख्याऽन्वयः, तेन पृथिव्यादीनामानन्त्यात् तत्र नवत्वस्य बाधितत्वेऽपि न क्षतिः ॥ नवैवेत्यन्वय इति । नवलक्षणाऽयोगव्यवच्छेदवन्ति द्रव्याणीत्यन्वय

न्यायबोधिनी

द्रव्याणि विभजते–पृथिवीति । नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति ? तथाहि—'नीलं तमश्चलती'ति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम् । नच–क्लृप्तद्रव्ये-

दीपिका

ननु तमसो दशमद्रव्यस्य विद्यमानत्वात् कथं नवैव द्रव्याणि ? तथा हि-"तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यात् नवभ्यो भेत्तुमर्हति" 'नीलं तमश्चलती'त्यबाधितप्रतीतिबलात्

विवृतिः

इत्यर्थः। विशेषणसङ्गतैवकारस्याऽयोगव्यवच्छेदार्थकत्वादित्याशयः। पूर्ववदत्राऽपि-द्रव्यत्वं पृथिव्यादिनवान्यतमत्वव्याप्यमित्येवं व्याख्येयम्, अन्यतमत्वमपि पूर्ववदूहनीयम्।

अन्धकारस्याऽतिरिक्तद्रव्यत्ववादिनां मीमांसकानां मतं दूषयितुमुपन्यस्यति—नन्विति। कथं नवैवेति। द्रव्यत्वस्याऽन्धकारेऽपि सत्त्वेन तत्र पृथिव्यादिनवान्यतमत्वविरहात् कथं द्रव्यत्वं नवाऽन्यतमत्वव्याप्यमित्यर्थः॥ तमसोऽतिरिक्तत्वे मीमांसकसम्वादमाह-तथाहीति। तमः = अन्धकारः, खलु = अवश्यम्, इत्यस्य 'भेत्तु'मित्यनेनाऽन्वयः, चलं = क्रियावत्, नीलं= नीलरूपवत्, पराऽपरविभागवत् = परत्वाऽपरत्वविभागरूपगुणवच्चेत्यर्थः। एतेन-क्रियावत्त्वेन गुणवत्त्वेन च तस्य द्रव्यत्वं-प्रतिपादितम्। नन्वेवं तमः पृथिव्यादिस्वरूपमेव स्यात्? न स्यात्, इत्याह—प्रसिद्धेति। प्रसिद्धानां = नैयायिकाभिमतानां पृथिव्यादिद्रव्याणां, वैधर्म्यात्=विरुद्धधर्मवत्त्वादित्यर्थः॥ नवभ्यः = तादृशनवद्रव्येभ्यः, अवश्यं भेत्तुमर्हति= भेदयोग्यं भवति, भेदवद्भवतीति यावत्॥ गुणाधारत्वस्य क्रियाधारत्वस्य च द्रव्यत्वसाधकस्य हेतोस्तमसि सर्ववादिसिद्धत्वं स्फुटीकर्तुमाह—नीलमिति॥ अबाधितप्रतीतिबलादिति। प्रमात्मकप्रत्यक्षप्रतीति-

न्यायबोधिनी

ष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति—वाच्यम्। आकाशादिपञ्चकस्य

---

आकाशादीति। तथा चाकाशादौ रूपाभावात्, तमसश्च रूपवत्वात्, नाऽऽकाशादिपञ्चकं तम इति भावः। निर्गन्धत्वादिति—गन्धाभाववत्वादित्यर्थः।

दीपिका

नीलरूपाधारतया क्रियाधारतया च द्रव्यत्वं तावत् सिद्धम् । तत्र तमसो नाकाशादि–पञ्चकेऽन्तर्भावः, रूपवत्त्वात् । अतएव न वायौ, स्पर्शा-

विवृतिः

स्यादित्यर्थः ॥ नीलरूपाधारतया=सिद्धया नीलरूपाधारतया । तथाच- "नीलं तमश्चलती'ति प्रतीतिः–विशेष्यविशेषणयोराधाराधेयभावाऽवगाहिनी,–अबाधितप्रतीतित्वात्, 'घटवद्भूतलमि'ति प्रत्यक्षप्रतीतिवदि"-त्यनुमानेन नीलाद्याधारत्वसिद्धौ सत्यां अनन्तरं–"तमः अवश्यं द्रव्यं भवितुमर्हति,—नीलाधारत्वात्,--क्रियाधारत्वाद्वा" इत्यनुमानेन द्रव्यत्वसिद्धिरित्याशयः ॥ नन्वन्धकारो गगनादिस्वरूप एव नत्वतिरिक्त इत्यत आह--तमस इति । आकाशादिपञ्चके = आकाशकालदिगात्ममनःपञ्चके । रूपवत्त्वात् = रूपाधिकरणत्वात् । तथाच "तमः-- आकाशादिभ्यो भिद्यते–आकाशादिस्वरूपं वा भवितुं नार्हति, रूपवत्वात्, ये हि रूपवन्तो भवन्ति तेऽवश्यमाकाशादिभ्यो भिन्ना भवन्ति- यथा घटादय" इत्यनुमानेन तमसि आकाशाद्यतिरिक्तत्वसिद्धिरिति भावः ॥ नन्वस्तु वायुस्वरूपमेव तम इत्यत आह--अत एवेति । पूर्वोक्तरूपवत्त्वात्मकहेतुतयैवेत्यर्थः ॥ 'वायाविति 'अन्तर्भाव' इत्यनुपज्यते, तथा च-- "तमः--वायुस्वरूपं भवितुं नाऽर्हति,--रूपवत्त्वात्, घटवदि"त्यनुमानेन वायुभेदसिद्धिरिति भावः ॥

न्यायबोधिनी

वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः, तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः, जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः, तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेत्–न, तेजोऽभावरूपत्वेनैवो-

तयोरन्तर्भाव इति । जलतेजसोरन्तर्भाव इत्यर्थः । तमसि शीतोष्णस्पर्शस्य विरहादित्याशयः । तेजोऽभावरूपत्वेनेति । तेजःसमान्याभावरूपत्वेनेत्यर्थः ।

दीपिका

भावात्, सदागतिमत्त्वाभावाच्च। नापि तेजसि, भास्वररूपाभावात्, उष्णस्पर्शाभावाच्च। नापि जले, शीतस्पर्शाभावात्, नीलरूपाश्रयत्वाच्च।

विवृतिः

कार्याऽभावलिङ्गकमप्यनुमानमाह-स्पर्शाऽभावादिति॥ केचित्तु-'अत एवे'त्यस्य—अग्रिमस्पर्शाऽभावरूपहेतुत्वेत्यर्थमाहुस्तच्चिन्त्यम्॥ तथा च—"तमः—न वायुस्वरूपम्,—स्पर्शाऽभावात्, घटत्वादिवत्" इत्यनुमानात् तमसि वायुभेदसिद्धिः॥ ननु—स्पर्शाऽभावो व्यभिचारी, तस्योत्पत्तिकालीनेऽपि वायौ सत्त्वेन तत्र वायुभेदविरहादित्यत आह—सदेति। सदा = सर्वकालीना या गतिः = गमनात्मिका क्रिया तदभाववत्त्वादित्यर्थः। गतिसामान्याभावस्य तमसि उभयवाद्यसिद्धतया सर्वकालीनत्वं गतिविशेषणम्॥ नाऽपीति। नाऽपि जलेऽन्तर्भावः संभवतीत्यर्थः। कुतः? शीतस्पर्शाऽभावात्। "तमः—अवश्यं जलभिन्नम्,—शीतस्पर्शाऽभावात्, तेजोवदि"त्याशयः॥ शीतस्पर्शाऽभावस्य पूर्वोक्तयुक्त्या व्यभिचारित्वमाशङ्क्य हेत्वन्तरमाह—नीलरूपाश्रयत्वाच्चेति। नीलरूपाधिकरणत्वाच्चेत्यर्थः। तथा च 'तमः—न जलस्वरूपम्,—नीलरूपाऽधिकरणत्वात्, नीलघटवदि'त्यनुमानेन तमसो जलभिन्नत्वसिद्धिरिति भावः॥ नन्वस्तु पृथिव्यात्मकमेव तम इत्यत आह—नाऽपीति।

न्यायबोधिनी

पपत्तावतिरिक्ततत्कल्पनायां मानाभावात्। नच—विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमस्त्विति—वाच्यम्। तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात्। तस्मादु-

---

विनिगमनाविरहात् = एकतरपक्षपातिनीयुक्त्यभावात्॥ तस्मादिति। तथाच—'अनुभूयमानोष्णस्पर्शाऽऽश्रयीभूतम्—अवश्यं द्रव्यं भवितुमर्हति, गुण-

दीपिका

नापि पृथिव्यां, गन्धवत्त्वाभावात्, स्पर्शरहितत्वाच्च । तस्मात् तमो दशमद्रव्यम् इति चेत् । न । तमसस्तेजोऽभावरूपत्वात् । तथाहि- 'तमो हि—न रूपवद्द्रव्यम्, आलोकाऽसहकृतचक्षुर्ग्राह्यत्वात्, आलोकाभाववत् । रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात् । तस्मात् प्रौढप्रकाशकतेजःसामान्याभावस्तमः, तत्र 'नीलं तमश्चलती'ति प्रत्ययो भ्रमः, अतो नव द्रव्याणीति सिद्धम् ।

विवृतिः

पृथिव्यामिति—अन्तर्भाव इत्यनुषज्यते ॥ गन्धवत्त्वाऽभावादिति । गन्धाधिकरणत्वाभावादित्यर्थः । तेन—नोत्पत्तिकालीनघटे व्यभिचारः, अधिकरणताया व्याप्यवृत्तित्वात् ॥ हेत्वन्तरमाह—स्पर्शरहितत्वादिति । स्पर्शाऽधिकरणत्वाऽभावादित्यर्थः । तथा च—'तमः—न पृथिव्यात्मकम्,—स्पर्शाऽधिकरणत्वाऽभावात्, आकाशादिवदि'—त्यनुमानेन तमसि पृथिवीभिन्नत्वसिद्धिरिति भावः ॥ उपसंहरति—तस्मादिति । क्लृप्तद्रव्येष्वनन्तर्भावादित्यर्थः ॥ दशमद्रव्यम् = पृथिव्यादिनवातिरिक्तं दशमं द्रव्यम् ॥ उत्तरयति—नेति ॥ तेजोभावरूपत्वात् = तेजःसामान्याभावरूपत्वात् ॥ तमसि रूपवद्द्रव्यस्वरूपत्वं पराभिमतं खण्डयति—तथाहीति । न रूपवद्द्रव्यम् = न रूपवद्द्रव्यस्वरूपम् ॥ तत्र हेतुमाह—आलोकेति । आलोकाऽसहकृतत्वम् = आलोकाऽसामानाधिकरण्यम्, तच्च चक्षुषो

न्यायबोधिनी

ष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम् । तमसि नीलत्वादिप्रतीतिस्तु भ्रान्तिरेव, दीपापसरणक्रियाया एव तत्र भानात् ॥

---

वत्वात्, इत्यनुमानात्तेजसो द्रव्यत्वसिद्धिरिति भावः ॥ तत्रेति । अन्धकारे-इत्यर्थः । भानात् = उपाधित्वेन ज्ञायमानत्वात् ।

विवृतिः

विशेपणम्, चक्षुर्ग्राह्यत्वं च = चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वम्, तेन—न 'घटकालीनं तम' इत्याकारकाऽलौकिकचाक्षुषप्रत्यक्षविपये घटे व्यभिचारः, न वा यादृशतामसव्यक्तेः कदाचित् कस्यचिदपि न चाक्षुषत्वं तादृशतामसव्यक्तिविशेषे तादृशचक्षुर्ग्राह्यत्वाऽसत्त्वेऽपि भागाऽसिद्धिः। चक्षुर्ग्राह्यत्वमात्रस्य हेतुत्वे तस्य पृथिव्यादिरूपिद्रव्यसाधारणतया तत्र रूपवद्द्रव्यभेदाऽसत्त्वेन व्यभिचाराऽऽपत्तेः, अत आलोकाऽसहकृतत्वं चक्षुपो विशेपणम्। न च—आलोकाऽसहकृतजन्यप्रत्यक्षविपयत्वमेव हेतुरस्त्विति—वाच्यम्; आलोकाऽसहकृतत्वगिन्द्रियजन्यप्रत्यक्षविपये घट-व्यक्तिविशेपे व्यभिचाराऽऽपत्तेः। अथाऽऽलोकग्राह्यतावच्छेदकधर्मशून्यत्वस्य हेतुत्वोपगमादेव सर्वसामञ्जस्ये इतरांशोपादानमनर्थकम्, नच—आलोकग्राह्यतावच्छेदक-जलत्वादिशून्ये घटे व्यभिचार इति—वाच्यम्। आलोकग्राह्यतावच्छेदकीभूता यावन्तो धर्मास्तावदभावसमुदायस्य हेतुत्वसंभवेन व्यभिचारवारणसंभवात्। नच—अभावत्वस्याऽऽलोकग्राह्यतावच्छेदकतया तच्छून्यतायास्तेजोभावरूप-तमःस्वरूपे पक्षे बाधितत्वात् स्वरूपाऽसिद्धिरिति—वाच्यम्। अभावमात्रस्याऽऽलोकग्राह्यत्वाभावेन तदवच्छेदकताया अभावत्वे विरहात्, तत्तदभावत्वस्य तथात्वेऽपि तच्छून्यतायास्तत्राऽनपायात् इति चेन्न, तस्य हेत्वन्तरत्वेन यथासन्निवेशे वैयर्थ्याऽभावादिति ध्येयम्॥

केचित्तु—तादृशसमुदायस्य निरुक्तहेत्वपेक्षया गुरुत्वेन तावत्पर्यन्तानुधावनमिति—वदन्ति॥ अपरे तु—आलोकाऽभावत्वस्य प्रतियोगिस्वरूपाऽऽलोकग्राह्यतावच्छेदकतया आलोकग्राह्यतावच्छेदकधर्मशून्यत्वस्य दृष्टान्ते विरहात् दृष्टान्ताऽसिद्धिरत आलोकाऽसहकृतचक्षुर्ग्राह्यत्वं हेतुरित्यप्याहुः॥ दृष्टान्तमाह—**आलोकाऽभाववदिति**। यद्यपि—तेजःसामान्याभावस्य तमस्त्वं न संभवदुक्तिकम्, सुवर्णादिमतो देशस्यापि तामसवत्त्वेन प्रत्ययस्य सर्वसिद्धत्वात्, अपि त्वालोकसामान्याभावः

दीपिका

'द्रव्यत्वजातिमत्त्वं' 'गुणवत्त्वं' वा द्रव्यसामान्यलक्षणम् ।

विवृतिः

एव तम इति पक्षस्य दृष्टान्ततयोपन्यासोऽसङ्गत-इत्युच्यते, तथापि—क्षुद्रालोकवतोऽपि देशस्याऽन्धकारवत्तयोपलब्धिदर्शनात् आलोकसामान्याभावस्य तमस्त्वाऽसंभवेन महाप्रभात्वावच्छिन्नाभावस्य तथात्वात् आलोकाऽभावस्य दृष्टान्ततयोपन्यास इत्यवधेयम् ॥

उक्तानुमानेऽनुकूलतर्कं प्रदर्शयति—रूपिद्रव्येत्यादि ॥ 'नीलं तम' इति भ्रमे आलोकस्याऽहेतुत्वादाह—चाक्षुषप्रमायामिति । तथा च—'तमो यदि रूपिद्रव्यत्वेन चाक्षुषप्रमाविषयीभूतं स्यात् तर्हि आलोककारणकं स्यादि' त्याकारकस्तर्कोऽत्राऽनुसन्धेय इति भावः ॥ तस्मादिति । तमसि रूपिद्रव्यभेदस्य निरुक्तक्रमेण सिद्धत्वादित्यर्थः ॥ प्रौढेति । अत्यन्तप्रकाशप्रयोजकं यत्तेजस्तत्सामान्याऽभावस्तम इत्यर्थः । तथा च—महाप्रभात्वावच्छिन्नाभाव एव तम इति भावः । तेन—न यत्किञ्चित्प्रकाशकतेजस्विनि देशेऽन्धकारप्रत्ययाऽनुपपत्तिः ॥ नन्वेवं तमसो द्रव्यातिरिक्तत्वे तत्र गुणादिमत्ताप्रत्ययो न स्यात्, द्रव्यस्यैव गुणकर्माऽधिकरणत्वनियमादित्यत आह—तत्रेति । 'नीलं तम' इत्यादिप्रत्ययाऽनुभवे-इत्यर्थः । विषयत्वं-सप्तम्यर्थः, अन्वयश्चाऽस्य 'प्रत्यये'—इत्यनेन, तथा च अनुभवविषयीभूत-'नीलं तमश्चलती'तिप्रत्यय इत्यर्थः पर्यवसितः ॥ भ्रम इति । नीलत्वाद्यभाववति नीलत्वादिप्रकारकः—चलनादिक्रियाद्यभाववति तादृशक्रियाप्रकारकश्चेत्यर्थः ॥ सर्वोपसंहारमाह—अत इति । यतो न तमो द्रव्यं अत इत्यर्थः ॥ मूलस्य न्यूनतां परिहरति—द्रव्यत्वेति । ननु-द्रव्यत्वजातेर्द्रव्यसामान्यलक्षणत्वे तस्या लक्ष्यतावच्छेदकद्रव्यत्वस्वरूपत्वापत्तिरत आह—गुणवत्त्वेति । तदेव हि गुणवत्त्वादिकं द्रव्यादिसामान्यलक्षणात्मकं भवितुमर्हति यदव्याप्त्यादिदोषत्रयशून्यं स्यात्, तदेव तु न,

दीपिका

लक्ष्यैकदेशावृत्तित्वम् = अव्याप्तिः, यथा गोः—'कपिलत्वम्'। अल-

विवृतिः

अव्याप्त्यादेः स्वरूपाऽविज्ञानेन तच्छून्यतायास्तत्र निश्चेतुमशक्यत्वात् इत्याशयेन गुणवत्त्वादेर्द्रव्यादिलक्षणस्वरूपत्वं व्यवस्थापयितुं प्रथममव्याप्त्यादिस्वरूपं प्रदर्शयति—लक्ष्यैकेति। लक्ष्यैकदेशः-यावतां लक्ष्याणां यः कश्चिदेको लक्ष्यः, तत्राऽवर्तमानो यो धर्मस्तत्त्वमव्याप्तिरित्यर्थः॥ यथेति। अव्याप्तं लक्षणं यथेत्यर्थः॥ गोरिति। गोर्लक्षणत्वेनाऽभिमतमिति शेषः, एवमग्रेऽपि॥ कपिलत्वमिति। तथा च—कपिलत्वस्य लक्ष्यैकदेशे शुक्लगव्यवर्तमानतयाऽव्याप्तिमत्त्वेन तस्य गोसामान्यलक्षणत्वं न संभवतीति—हृदयम्। न च—कपिलत्वस्याऽलक्ष्यीभूत-कपिलघटादिवृत्तितयाऽतिव्याप्तिमत्त्वादेव गोसामान्यलक्षणत्वनिराकरणसंभवेऽव्याप्तिमत्तया तन्निराकरणमसङ्गतमिति—वाच्यम्, गोः कपिलत्वमित्यनेन गोनिष्ठकपिलत्वस्यैव गोसामान्यलक्षणत्वेन विवक्षितत्वात्, तस्य चाऽलक्ष्यीभूतकपिलघटाद्यवृत्तित्वेनाऽतिव्याप्तेरसंभवात्॥

केचित्तु—कपिलत्वमात्रस्य लक्षणत्वेऽपि इदानीमतिव्याप्तेः स्वरूपाऽपरिचयेन तद्वत्त्वस्य तत्र वक्तुमशक्यत्वादिति—वदन्ति। वस्तुतोऽतिव्याप्त्यपेक्षयाऽव्याप्तेर्बलवद्दोषत्वेन तद्वत्तयैव कपिलत्वमात्रस्य गोसामान्यलक्षणत्वनिराकरणस्यौचित्यात्, तत्राऽतिव्याप्तिसत्त्वेऽपि तस्या अकिञ्चित्करत्वादिति—ध्येयम्॥ अलक्ष्यवृत्तित्वमिति। यावल्लक्ष्यवृत्तित्वे सतीति पूरणीयम्, तेन न कपिलत्वमेकशफत्वं वाऽतिव्याप्तिमद्गोसामान्यलक्षणत्वेनाऽभिमतम्, तत्राऽव्याप्त्यसंभवयोः सत्त्वेनाऽतिव्याप्तेरकिञ्चित्करत्वादित्यवधेयम्, तथा च—यावति लक्ष्ये वर्तमानोऽलक्ष्ये च वर्तमानो यो धर्मस्तत्त्वमतिव्याप्तिरित्यर्थः—पर्यवसितः॥ यथेति। अतिव्याप्तिमल्लक्षणं यथेत्यर्थः। शृङ्गित्वं=शृङ्गसम्बन्धित्वम्, तथा च शृङ्गित्वस्य लक्ष्यीभूते यावति गवि वर्तमानतया लक्ष्यभिन्ने च महिषादौ वर्तमानतया तस्याऽतिव्याप्तिमत्त्वाच्च

दीपिका

क्ष्यवृत्तित्वमतिव्याप्तिः, यथा गोः 'शृङ्गित्वं', लक्ष्यमात्रावर्त्तनमसम्भवः, यथा गोरेकशफत्वं, एतद्दोषत्रयरहितो धर्मो लक्षणम् यथा

विवृतिः

गोसामान्यलक्षणत्वं भवितुमर्हतीति भावः ॥ लक्ष्यमात्रेति । लक्ष्यीभूते यावत्यवर्तमानो यो धर्मस्तत्त्वमसंभव इत्यर्थः ॥ यथेति । असंभवदोषवल्लक्षणं यथेत्यर्थः । एकशफत्वम्—एकः शफः—खुरविशेषो येषां ते—एकशफास्तेषां भाव एकशफत्वम्—एकखुरविशेषवत्त्वमिति यावत्, तथा चैतस्य कुत्राऽपि गव्यवर्तमानतयाऽसंभवदोषेण नैतदपि गोसामान्यलक्षणभावमासादयति, गवां चतुःशफत्वादिति—हृदयम् । न चाऽसंभववतो निरुक्तस्याऽन्यस्य वा धर्मस्य अलक्ष्यीभूतेऽपि वर्तमानतयाऽतिव्याप्तेरेवाऽलक्ष्यताप्रयोजकत्वं वक्तव्यं न त्वसंभवस्येति—वाच्यम्, असंभवस्याऽतिव्याप्तेरपेक्षया बलवद्दोषत्वेनाऽतिव्याप्तेरकिञ्चित्करत्वादित्यभिहितं—प्राक् ॥

यत्तु—अव्याप्त्यादिमतो धर्मस्याऽभिन्नत्वेऽपि अव्याप्त्यादिदोषाणां भिन्नत्वात् तत्तद्दोषवत्त्वेन तत्तद्धर्माणामुदाहरणत्वेनाऽभिहितमिति, तदसत्, एकदोषेणैव धर्मस्याऽलक्षणत्वसंभवे दोषान्तरवत्त्वेन तस्याऽलक्षणत्वाऽभिधानस्याऽसङ्गतत्वापत्तेरिति—ध्येयम् ॥

एतदिति । अव्याप्तिरहितत्वे सति अतिव्याप्तिरहितत्वे च सति असंभवरहितो यो धर्मः स एव लक्षणमित्यर्थः, यथाश्रुतार्थस्तु न सङ्गच्छते, एकमात्रदोषवतो धर्मस्य दोषत्रयरहितत्वेन तस्य लक्षणत्वाऽऽपत्तेः । दोषत्रयरहितत्वेन यादृशधर्मस्य गोसामान्यलक्षणत्वं संभवति तादृशधर्मं प्रदर्शयति—यथेति । सास्नावत्त्वम्—गलकम्बलवत्त्वम्, तथा च—तस्य सकलगोषु वर्तमानतया गोभिन्नेषु चाऽवर्तमानतया निरुक्तदोषत्रयशून्यत्वेन गोसामान्यलक्षणत्वे बाधकाऽभाव इति भावः ॥ स एव—दूषणत्रयरहित एव । असाधारणत्वं तथा निर्वाच्यं यथा दोषत्रयरहितत्वमसाधा-

दीपिका

गोः सास्नादिमत्त्वं, स एव असाधारणधर्म इत्युच्यते। लक्ष्यतावच्छे-

विवृतिः

रणत्वव्यापकं स्यात्, 'स एवे'त्यादिनाऽसाधारणत्वव्यापकतायास्तत्र सूचितत्वादित्याह—लक्ष्यतावच्छेदकेति। समनियतत्वम्—स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकीभूतं यल्लक्ष्यतावच्छेदकं तदधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वरूपम्, स्वं—लक्षणत्वेनाऽभिमतो धर्मविशेषः, भवति हि सास्नावत्त्वं गोसामान्यलक्षणम्, सास्नावत्त्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकीभूतं यद्गोत्वं तदधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वस्य तत्र सत्त्वात्, सास्नावति गोभेदस्य—गोत्ववति च सास्नावतोभेदस्याऽसत्त्वात्। न वा कपिलत्वादिकं तथा, कपिलगवि गोभेदाऽसत्त्वेऽपि लक्ष्यतावच्छेदकगोत्ववति शुक्लगवि कपिलभेदसत्त्वेन कपिलत्वस्य लक्ष्यतावच्छेदकगोत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वात्, एवम्—शृङ्गित्ववति महिषे गोभेदसत्त्वेन गोत्वरूपलक्ष्यतावच्छेदकस्य शृङ्गित्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वेन शृङ्गित्वस्य,—एकशफत्ववति गोभेदस्य,—गोत्ववति चैकशफभेदस्य वर्तमानतया एकशफत्वस्य गोत्वस्य च परस्पराऽधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वात् एकशफत्वस्याऽपि न गोसामान्यलक्षणत्वं संभवतीति बोध्यम्, अनयैव रीत्याऽन्यत्राऽपि लक्षणात्मकधर्मे निरुक्तसमनियतत्वं स्वयमूहनीयमित्यास्तां विस्तरः॥

इदं तु बोध्यम्—लक्ष्यतावच्छेदके तादृशप्रतियोगिताऽनवच्छेदकत्वदलं अतिव्याप्त्यसंभवदोषशून्यताप्रयोजकम्, स्वस्मिंश्च तादृशप्रतियोगिताऽनवच्छेदकत्वदलमव्याप्त्यादिशून्यताप्रयोजकम्, अव्याप्तिमतो धर्मस्य लक्षणतयेतरभेदाऽनुमापकत्वे तस्य भागाऽसिद्धत्वम्, अतिव्याप्तिमतो व्यभिचारित्वम्, असंभवदोषवतश्च स्वरूपाऽसिद्धत्वमिति॥

ननु—लक्ष्येतरभेदाऽनुमापकधर्मस्यैव लक्षणतया मतान्तरसिद्धतया

दीपिका

दकसमनियतत्वम् = असाधारणधर्मत्वम् । व्यावर्त्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय 'तद्भिन्नत्वं' धर्मविशेषणं देयम् । व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयम्, व्यावृत्तेरपि

विवृतिः

तद्भिन्नेऽपि लक्ष्येतरभेदे लक्ष्यनिष्ठाऽभिधेयत्वे च निरुक्तलक्ष्यतावच्छेदकसमनियतत्वसत्त्वात् तयोरपि लक्षणत्वाऽऽपत्तिरत आह—व्यावर्तकस्यैवेति । लक्ष्येतरभेदाऽनुमापकहेतुरूप-धर्मस्यैवेत्यर्थः । एवकारेण-व्यवहारोपयोगिनो धर्मस्य लक्षणत्वाऽभावः-सूचितः । लक्षणत्वे = लक्षणतयाऽभिप्रेतत्वे । व्यावृत्तौ = लक्ष्येतरभेदे ॥ अभिधेयत्वादाविति । लक्ष्यनिष्ठाऽभिधेयत्वादावित्यर्थः । आदिपदात्—तादृशप्रमेयत्वादिपरिग्रहः ॥ अतिव्याप्तिवारणायेति । स्वसमानाधिकरणभेदप्रतियोगिताऽनवच्छेदक—गोत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वस्य गवेतरभेदे गोनिष्ठाऽभिधेयत्वे च विद्यमानत्वात् तत्र तत्र प्रसक्ताया गोलक्षणताया वारणायेत्यर्थः ॥ तद्भिन्नत्वम् = लक्ष्येतरभेदभिन्नत्वम्, लक्ष्यनिष्ठाऽभिधेयत्वादिभिन्नत्वं च । धर्मविशेषणम् = इतरभेदाऽनुमापकहेतुस्वरूपलक्षणात्मकधर्मविशेषणम् ॥ देयमिति । तथा च—लक्ष्येतरभेदभिन्नत्वे सति लक्ष्यनिष्ठाऽभिधेयत्वादिभिन्नत्वे च सति लक्ष्यतावच्छेदकसमनियतो यो धर्मविशेषस्तस्यैव लक्षणत्वं तन्मते पर्यवसितमिति भावः ॥ व्यवहारस्यापीति । 'अयं गौ'रित्यादिव्यवहारस्याऽपीत्यर्थः ॥ लक्षणप्रयोजनत्वे = लक्षणफलत्वेनाऽभिमतत्वे ॥ न देयमिति । तादृशव्यावृत्तिभिन्नत्वं,—तादृशाऽभिधेयत्वादिभिन्नत्वं च तादृशधर्मविशेषणं परित्याज्यमेवेत्यर्थः ॥ निरुक्तविशेषणपरित्यागे बीजमाह—व्यावृत्तेरपीति । लक्ष्येतरभेदस्याऽपीत्यर्थः ॥ व्यवहारसाधनत्वात् = 'अयं गौ'रित्यादिव्यवहारं प्रति प्रयोजकत्वात् । नन्वेवं गुणवत्त्वं द्रव्यसामान्यलक्षणं मास्तु, लक्ष्यतावच्छेदकद्र-

दीपिका

व्यवहारसाधकत्वात्। ननु 'गुणवत्त्वं' न द्रव्यलक्षणम्, आद्यक्षणे,—उत्पन्नविनष्टे,—द्रव्ये चाव्याप्तेरिति चेन्न। गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात्॥

विवृतिः

व्यत्ववदुत्पत्तिकालीन-घटादौ गुणवत्त्वाऽभावेन तस्य लक्ष्यतावच्छेदकसमनियतत्वाऽभावादित्याशङ्कते—नन्विति। नन्वाद्यक्षणे घटादौ गुणवत्त्वाऽभावस्य प्रामाणिकत्वं सन्दिग्धमेवेत्यत आह—उत्पन्नविनष्टेति। वस्तुतस्तादृशद्रव्ये मानाऽभावात् 'आद्यक्षणे'—इत्यस्य—उत्पन्न—घटकीभूतायामुत्पत्तावन्वयं स्वीकृत्य आद्यक्षणाऽवच्छिन्नोत्पत्तिविशिष्टद्रव्ये विनष्टे च द्रव्येऽव्याप्तिरित्यर्थः समीचीन इति—ध्येयम्॥

अव्याप्तेरिति। लक्ष्यैकदेशे तादृशघटादौ गुणवत्त्वस्याऽसत्वादिति भावः॥ समाधत्ते—नेति॥ गुणेति। गुणाऽधिकरणे वर्तमाना या सत्ताभिन्ना जातिस्तद्वत्त्वं द्रव्यसामान्यलक्षणमित्यर्थः। गुणत्वादिजातिमादाय गुणादावतिव्याप्तिवारणाय—गुणसामानाधिकरण्यं जातिविशेषणम्। गुणसमानाधिकरणसत्ताजातिमादाय तत्रैव गुणादावतिव्याप्तिरतः—सत्ताभिन्नत्वमपि तादृशजातिविशेषणम्। द्रव्यगुणान्यतरत्वमादाय गुणेऽतिव्याप्तिवारणाय—जातिपदमित्यवधेयम्।

विवक्षितत्वादिति। तथा च गुणाऽधिकरण गगनादि·वृत्तिसत्ताभिन्न-द्रव्यत्वजातिमत्त्वस्य उत्पन्नविनष्टघटादौ सत्वान्न तत्राऽव्याप्तिः संभवतीति भावः॥

इदन्त्ववधातव्यम्—गुणवत्त्वोपलक्षितत्वमात्रस्य लघुतया द्रव्यसामान्यलक्षणत्वसम्भवे गुरुतर—'गुणसमानाधिकरणे'त्याद्यनुसरणं अफलम्। न च—गुणवत्त्वोपलक्षितत्वं प्रतियोगिव्यधिकरण·गुणाभावाभाववत्वमिति तदपेक्षया लाघवसंभवात् 'गुणसमानाधिकरणे'त्यादिकमभिहित·

दीपिका

ननु एवमपि 'एकं रूपं रसात् पृथक्' इति व्यवहारात् रूपादावतिव्याप्तिरिति चेन्न । एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात् ।

विवृतिः

मिति—वाच्यम् । भवन्मतेऽपि गुणसामानाधिकरण्यस्योपलक्षणतयैव विवक्षणीयतया लाघवाऽनवकाशात्, अन्यथा—गुणाऽधिकरणवृत्तित्वविशिष्ट-द्रव्यत्व-जातेरुत्पन्नद्रव्यादावसत्त्वेन तत्राऽव्याप्तिरशक्यपरिहारा स्यादिति ॥

शङ्कते—नन्विति । एवं = निरुक्तजातिमत्त्वस्य द्रव्यसामान्यलक्षणत्वाऽभ्युपगमे ॥ 'एकं रूप'मित्यादिना—एकत्वसंख्याया रूपे वर्तमानत्वं सूचितम् ॥ न केवलं रूपादौ संख्यावत्त्वमात्रमपि तु गुणान्तरवत्त्वमपीत्याह—रसादिति ॥ पृथक् = पृथक्त्वात्मकगुणवत् । व्यवहारात् = सर्वजनसिद्ध-तादृशाऽभिलापस्याऽवश्यं स्वीकरणीयत्वात् ॥ अतिव्याप्तिरिति। तथा च—एकत्वादिरुपगुणाऽधिकरणे रूपे वर्तमाना या सत्ताभिन्ना रूपत्वादिजातिस्तद्वत्त्वस्य रूपादौ सत्त्वात्, तत्र तत्र द्रव्यसामान्यलक्षणस्याऽतिव्याप्तिरित्यर्थः ॥ उत्तरयति—नेति । एकाऽर्थसमवायादेव—स्वाऽधिकरणाऽनुयोगिकसमवायवत्त्वरूपसम्बन्धादेव । स्वम्—एकत्वादि । एवकारेण-समवायस्य तादृशव्यवहारोपयोगिताव्यवच्छेदः ॥ तादृशव्यवहारोपपत्तेः = 'एकं रूप'मिति व्यवहारोपपत्तेः । तथा च—पूर्वोक्तद्रव्यसामान्यलक्षणघटकीभूत 'गुणाऽधिकरणत्वं' समवायेनैव निवेश्यम्, रूपादेस्तादृशसम्बन्धेन गुणाऽधारत्वाऽभावान्न तत्राऽतिव्याप्तिरिति भावः ॥ गुणे=रूपादौ ॥ गुणाऽनङ्गीकारादिति । समवायेन एकत्वादेर्गुणस्याऽधिकरणताया गुणादौ नैयायिकैरनभ्युपगमादित्यर्थं इति—दिक् ॥

रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-परत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माऽधर्म-संस्काराश्चतुर्विंशतिर्गुणाः । उत्क्षे-

दीपिका

गुणं विभजते—रूपेति । द्रव्यकर्मभिन्नत्वे सति सामान्यवान्—गुणः, गुणत्वजातिमान् वा लघुत्वमृदुत्वकठिनत्वादीनां विद्यमानत्वात् कथं चतुर्विंशतिगुणा इति चेन्न । लघुत्वस्य गुरुत्वाभावरूपत्वात्, मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वात् ॥

कर्म विभजते—उत्क्षेपणेति । संयोगभिन्नत्वे सति संयोगासमवायिकारणम्, कर्मत्वजातिमद्, वा ॥

विवृतिः

गुणमिति । जात्यपेक्षया एकवचनं बोध्यम् । विभजते—इत्यस्य पूर्ववदर्थो बोध्यः । द्रव्येति । द्रव्यभिन्नः कर्मभिन्नश्च यो जातिमान् स गुण इत्यर्थः । द्रव्ये कर्मणि चाऽतिव्याप्तिवारणाय-द्रव्य-कर्म-भिन्नत्वं जातिमतो विशेषणम् । 'जाति' पदानुपादाने जातित्वं अभावत्वं चाऽऽदाय जातावभावे चाऽतिव्याप्तिरतस्तदुपादानम् । 'गुणत्वजातिमत्त्वं वे'त्यत्र 'वा'कारोऽनास्थायाम् । अन्यथा-गुणत्वजातेर्गुणसामान्यलक्षणत्वे लक्षण-लक्ष्यतावच्छेदकयोरैक्यप्रसङ्गः स्यादिति—ध्येयम् ।

शङ्कते—लघुत्वेति । लघुत्वादयः क्लृप्तेष्वेव पदार्थेष्वन्तर्भविष्यन्ति नत्वतिरिक्ता इति समाधत्ते—नेति । गुरुत्वाऽभावेति । तथा च तस्याऽभावमध्ये एवाऽन्तर्भावोऽतीन्द्रियत्वं चेति भावः । संयोगविशेषरूपत्वात् = संयोगात्मकगुणस्वरूपत्वात् । तथाच न तयोरप्यतिरिक्तत्वमाशङ्कनीयमिति हृदयम् ।

कर्मेति । अत्राऽप्येकवचनं पूर्ववदूहनीयम् । विभजते-इत्यस्याऽपि

पणाऽपक्षेपणाऽऽकुञ्चन-प्रसारण-गमनानि-पञ्च-कर्माणि। पर-

दीपिका

ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् पञ्चेत्यनुपपन्न-मिति चेन्न । भ्रमणादीनामपि गमनेऽन्तर्भावान्न पञ्चत्वविरोधः ॥

सामान्यं विभजते—परमिति । परमधिकदेशवृत्ति, अपरं न्यूनदेशवृत्ति, सामान्यादिचतुष्टये जातिर्नास्ति ॥

विवृतिः

पूर्ववदेवाऽर्थः ॥ संयोगेति । संयोगभिन्नं यत् संयोगस्याऽसमवायिकारणं तत्—कर्मेत्यर्थः । संयोगस्याऽपि संयोगाऽसमवायिकारणतया तत्राऽतिव्याप्तिवारणाय संयोगभिन्नत्वं असमवायिकारणविशेषणम् । संयोगभिन्नाऽसमवायिकारणे रूपादावतिव्याप्तिवारणाय—संयोगेति । संयोगभिन्ने संयोगनिमित्तकारणे प्रयत्नादावतिव्याप्तिवारणाय—तदसमवायिकारण-मित्युक्तम् । कर्मत्वेति । अत्रापि 'वा'कारोऽनास्थायामेवेत्यवधेयम् । भ्रमणादीनां निरुक्तपञ्चाऽतिरिक्तत्वं खण्डयितुं शङ्कते—नन्विति । 'भ्रमणादे'रित्यादिपदात् रेचनादिपरिग्रहः ॥ नेति । गमनेऽन्तर्भावात् = तेषां गमनस्वरूपत्वात् । भ्रमणादौ 'गमन'प्रयोगस्य मुख्यत्वात् भ्रमणादिकं गमनात्मकमेव, उत्क्षेपणादौ च तत्प्रयोगो भाक्त इति नोत्क्षेपणादीनामपि गमनस्वरूपत्वमिति तु—तत्त्वम् ।

न पञ्चत्वविरोध इति । पञ्चाऽतिरिक्तस्य सत्त्वे एव पञ्चत्वविरोधः संभवतीति हृदयम् ।

सामान्यमिति । पराऽपरद्वित्वावच्छिन्न-जात्यर्थकसामान्यपदार्थैकदेशे द्वित्वे सुवर्थैकत्वस्याऽन्वयः प्रयत्नेनोपपादनीयः । 'पराऽपरे'त्यादिमूलग्रन्थस्य विभागमात्रोपयोगितया सामान्य—सामान्यलक्षणं त्वग्रे विवेचनीयमेवाऽनुसन्धेयम् । परेति । यदपेक्षया या जातिरधिकदेशे वर्तते सा-परा जातिरित्यर्थः, यथा—सत्ताया द्रव्ये गुणे कर्मणि च वर्तमानायाः सकल-

अपरं चेति—द्विविधं सामान्यम् । नित्यद्रव्यवृत्तयो विशेषा-स्त्वनन्ता एव । समवायस्त्वेक एव ।—

दीपिका

विशेषं विभजते—नित्येति । पृथिव्यादिचतुष्टयस्य परमाणवः, आकाशादिपञ्चकं च नित्यद्रव्याणि ॥

समवायस्य भेदो नास्तीत्याह—समवायस्त्विति ।

विवृतिः

जात्यपेक्षया अधिकदेशवृत्तित्वात् परत्वम् ॥ अपरेति । यदपेक्षया या जातिरल्पदेशे वर्तते सा—अपरा जातिरित्यर्थः, यथा—द्रव्यत्वादेः सत्ताऽपेक्षयाऽल्पदेशवृत्तित्वात्—अपरत्वम् द्रव्यत्वादेस्तु पृथिवीत्वाद्यपेक्षयाऽधिकदेशवृत्तित्वात् परत्वमपि बोध्यम् । सामान्यादिचतुष्टये = सामान्ये, विशेषे, समवाये, अभावे च ॥ जातिर्नास्तीति । जात्यनधिकरणत्वं तत्र वर्तते—इत्यर्थः । एतेन—जात्यधिकरणत्वं द्रव्य-गुण-कर्मणामेवेति—सूचितम्, अधिकमग्रे विवेचयिष्यते ॥

विशेषमिति । व्यक्त्यपेक्षयैकवचनम् । कानि नित्यद्रव्याणीत्याकाङ्क्षायामाह—पृथिव्यादीति । पृथिवीजलतेजोऽनिलानां परमाणव इत्यर्थः । आकाशादिपञ्चकम्—आकाश-काल-दिगात्म-मनःपञ्चकम् । नित्यद्रव्याणि = ध्वंसाऽप्रतियोगित्वे सति प्रागभावाऽप्रतियोगित्व-विशिष्टद्रव्याणि । अधिकन्त्वग्रेऽनुसन्धेयम् ।

मूले—समवायस्त्विति । कपालादावयवे घटाद्यवयविनो यः सम्बन्धः, द्रव्येषु गुणकर्मणोर्यः सम्बन्धः, द्रव्ये गुणे कर्मणि च जातेर्यः सम्बन्धः, नित्यद्रव्ये विशेषस्य च यः सम्बन्धः, स सम्बन्धः समवाय इत्यर्थः । तादृशस्य सम्बन्धस्य नित्यत्वमेकविधत्वं चेत्याह—एक एवेति । एवकारेण—तस्य नानात्व-व्यवच्छेदः । समवायस्यैकत्वेऽपि प्रतियोगि-

अभावश्चतुर्विधः—प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति । इत्युद्देशग्रन्थः ।

तत्र 'गन्धवती'-पृथिवी ।

दीपिका

अभावं विभजते—अभाव इति । इत्युद्देशग्रन्थः ।

तत्रोद्देशक्रमानुसारेण प्रथमं पृथिव्या लक्षणमाह—गन्धवतीति । नाम्ना पदार्थसङ्कीर्त्तनम्—उद्देशः, उद्देशक्रमे च सर्वत्र

विवृतिः

तत्सम्बन्धयोरुभयोः सत्त्वस्यैव तद्वत्ताबुद्धिनियामकतया वायौ रूपसमवायसत्त्वेऽपि तदीयप्रतियोगिनो रूपस्य तत्राऽसत्त्वात् न 'वायू रूपवानि'ति प्रतीतिः । अन्यदग्रे वक्ष्यते ॥

**अभावमिति ।** अभावत्वस्याऽखण्डोपाधित्वमते तत्रैकत्वाऽन्वयमभिप्रेत्य—एकवचननिर्देशः । अभावसामान्यलक्षणं प्रागभावादिसामान्यलक्षणं चाऽग्रे विवेचनीयमेवाऽऽदरणीयम् ॥

**तत्रेति**-मूलपाठाऽवधारणम्, तदर्थश्च—तेषु नवद्रव्येषु मध्ये ॥ **उद्देशक्रमाऽनुसारेणेति ।** प्रथमं पृथिव्या एवोद्दिष्टत्वादिति भावः । **गन्धवतीति ।** गन्धवत्त्वं पृथिव्या लक्षणमिति तात्पर्यम् । पृथिव्यां चतुर्दशगुणा वर्तन्ते-ते च रूप-रस-गन्ध-स्पर्श-संख्या-परिमिति-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्व-द्रवत्व-गुरुत्व-स्थितिस्थापकसंस्कारा बोध्याः ॥ उद्देशपदार्थमाह—**नाम्नेति ।** पदार्थसङ्कीर्तनम् = पदार्थकथनम् ॥ इच्छैव=स्वतन्त्रेच्छैव । एवकारः—अप्यर्थे । तेन कारणान्तरस्य तादृशक्रमनियामकत्वेऽपि न

न्यायबोधिनी

गन्धवतीति । गन्धवत्त्वं पृथिव्या लक्षणम् । लक्ष्या पृथिवी,

दीपिका

इच्छैव नियामिका ॥ ननु—सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्पर-विरोधेन गन्धानुत्पादादव्याप्तिः, न च-तत्र गन्धप्रतीत्यनुपपत्तिरिति—

विवृतिः

क्षतिः। नियामिका = प्रयोजिका ॥ शङ्कते—नन्विति। सुरभ्यसुरभ्यवयवाऽऽरब्धे = सुगन्ध-दुर्गन्धयुक्ताऽवयवजन्ये द्रव्ये = पृथिवीविशेषे। परस्परविरोधेन = सुगन्धाऽवयवस्य दुर्गन्धद्रव्योत्पत्तौ,—दुर्गन्धाऽवयवस्य सुगन्धद्रव्योत्पत्तौ,—प्रतिबन्धकत्वेन। गन्धाऽनुत्पादात् = गन्धाऽनुत्पत्तेर-वश्यं स्वीकरणीयत्वात्। अव्याप्तिरिति। तादृशद्रव्यस्य पृथिवीस्वरूपतया तत्र गन्धाऽभावेन गन्धवत्त्वरूपलक्षणस्याऽसत्त्वात्—अव्याप्तिरित्यर्थः ॥ न चेति। न चैवमित्यर्थः ॥ एवम् = निरुक्तद्रव्ये गन्धाऽनुत्पादे। तत्र = सुगन्धदुर्गन्धाऽवयवाऽऽरब्धे द्रव्ये। गन्धप्रतीत्यनुपपत्तिः = गन्धप्रत्यक्षाऽनुपपत्तिः ॥ तादृशद्रव्ये यद्गन्धप्रत्यक्षं तत्त्ववयवगन्धविषयकमेव, एकस्मिन् द्रव्ये नानागन्धाऽनभ्युपगमादित्याह—अवयवगन्धस्यैवेति। एवकारेण—अवयविद्रव्यगन्धभानव्यवच्छेदः। तत्र = गन्धप्रतीतौ, गन्धप्रत्यक्षे—इति यावत्। भानसंभवेन = विषयत्वसंभवेन ॥ चित्रेति। एक-

न्यायबोधिनी

पृथिवीत्वं लक्ष्यतावच्छेदकम्, यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः, यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नः, तथाच लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना। गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम् ॥

---

यद्धर्मावच्छिन्नमिति। यद्धर्मविशिष्टमित्यर्थः ॥ उत्पत्तिकालीनपृथिव्यामव्याप्तिवारणायाह—गन्धेति। द्रव्यत्वव्याप्यजलत्वादिजातिमादाय जलादावतिव्याप्तिवारणाय गन्धसामानाधिकरण्यं जातिविशेषणं, गन्धसमानाधिकरणसत्ताजातिमादाय तत्रैवाऽतिव्याप्तिवारणाय—द्रव्यत्वव्याप्येति, गन्धसमानाधिकरणद्रव्यत्व-

दीपिका

वाच्यम्, अवयवगन्धस्यैव तत्र भानसम्भवेन चित्रगन्धानङ्गीकारात्, किञ्चोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न । गन्धसमानाधिकरणद्रव्यत्वाऽपरजातिमत्त्वस्य विवक्षितत्वात् । ननु—जलादावपि

विवृतिः

स्मिन् नानागन्धस्याऽनुभवेनाऽविपयीकरणादिति हृदयम्, तथा चाऽस्त्येव तत्र द्रव्येऽव्याप्तिरिति भावः ॥ तादृशप्रतीताववयवगन्धमात्रभाने विवादादाह—किञ्चेति । उत्पन्नविनष्टघटादौ = उत्पन्नघटादौ, विनष्टघटादौ च ॥ अव्याप्तिरिति । तत्र गन्धाऽभावादित्याशयः ॥ उत्तरयति—नेति । गन्धेति । गन्धाऽधिकरणे विद्यमाना या द्रव्यत्वाऽपेक्षयाऽल्पदेशे वर्तमाना जातिस्तद्वत्त्वस्य पृथिवीसामान्यलक्षणत्वेन विवक्षितत्वादित्यर्थः । तथा च गन्धाऽधिकरणचन्दनादौ वर्तमानाया द्रव्यत्वाऽपरपृथिवीत्वजातेस्तादृशाऽवयवाऽऽरब्धेऽपि द्रव्ये सत्त्वान्न तत्राऽव्याप्तिरिति भावः। द्रव्यत्वाऽपरजलत्वादिजातिमादाय जलादावतिव्याप्तिवारणाय—गन्धसामानाधिकरण्यं तादृशजातिविशेषणम् । गन्धसमानाधिकरण-सत्ताजातिमादाय जलादौ गुणादौ चाऽतिव्याप्तिवारणाय द्रव्यत्वाऽपरत्वमपि जातिविशेषणं बोध्यम् । गन्धसमानाधिकरणद्रव्यत्वरूपाऽपरां जातिमादाय जलादावतिव्याप्तिवारणाय—द्रव्यत्वेति । गन्धसमानाधिकरण-द्रव्यत्वाऽपर-पृथिवीजलाऽन्यतरत्वधर्ममादाय जलेऽतिव्याप्तिरतो जातिपदमिति ध्येयम् ।

पुनराशङ्कते—नन्विति । जलादावित्यादिना वायुपरिग्रहः । गन्धप्रतीतेः = 'जलं सुगन्धं दुर्गन्धं वे'त्याकारकप्रमात्मकज्ञानस्योदयात् ।

न्यायबोधिनी

एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलादीनां लक्ष्यता, जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम् ॥

---

व्याप्यपृथिवीजलान्यतरत्वादिकमादाय जलादावतिव्याप्तिवारणाय—जातिपदम् ।

दीपिका

गन्धप्रतीतेरतिव्याप्तिरिति—चेन्न, अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात्। ननु–तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां तत्रातिव्याप्तिरिति—चेन्न, सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन लक्षणस्याभिमतत्वात्। पृथिवीं विभजते—

विवृतिः

तथा च—उक्तप्रतीत्यनुरोधेन तत्राऽपि गन्धवत्त्वमस्तीति भवत्यतिव्याप्तिरित्याशयः॥ उत्तरयति—नेति। अन्वयव्यतिरेकाभ्याम् = पृथिवीसत्त्वे गन्धसत्त्वं—पृथिव्यसत्त्वे च ने'त्याकारकनिश्चयाभ्याम्। पृथिवीगन्धस्यैव = जलसम्बन्धिपृथिवीगन्धस्यैव। तत्र = 'सुगन्धं जल'मित्यादिप्रतीतौ। भानाऽङ्गीकारात् = विषयत्वाऽङ्गीकारात्। तथा च जले गन्धविरहान्न तत्राऽतिव्याप्तिरिति भावः॥

नन्विति। तथापि = 'गन्धसमानाधिकरणे'—त्यादेः पृथिवीलक्षणत्वाऽभ्युपगमेऽपि। कालस्य = महाकालस्य। सर्वाधारतया = जगदाधारतया। तत्र = महाकाले॥ अतिव्याप्तिरिति। तथा च कालिकसम्बन्धेन सर्वस्य वस्तुनो महाकाले विद्यमानतया गन्धसमानाधिकरणतादृशपृथिवीत्वजातेरपि तेन सम्बन्धेन तत्र सत्त्वात् भवत्यतिव्याप्तिरिति भावः॥ समाधानमाह—नेति॥ सर्वेति॥ जगदाधारताप्रयोजकीभूतो यः कालिकसम्बन्धः तद्भिन्नसमवायादिसम्बन्धेनेत्यर्थः। लक्षणस्य = लक्षणात्मकधर्मवत्त्वस्य। अभिमतत्वात् = लक्षणकर्तुरिच्छाविशेषविषयत्वात्। तथा च समवायसम्बन्धेन तादृशपृथिवीत्वजातेर्महाकालेऽसत्त्वान्न तत्राऽतिव्याप्तिरित्याशयः॥

परमाणुपुञ्जानां घटाद्यात्मकत्वे घटादेः प्रत्यक्षत्वं न स्यात् परमाणोरतीन्द्रियतया तत्पुञ्जस्याऽप्यतीन्द्रियत्वादतो घटाद्यात्मकोऽवयवी अवश्यं स्वीकर्तव्यः, अवयविनां चाऽवयवधारास्वीकारे सुमेरुसर्षपयोरप्यनन्ताऽवय-

सा द्विविधा । नित्याऽनित्या च । नित्या-परमाणुरूपा । अनित्या-कार्यरूपा । पुनस्त्रिविधा-शरीरेन्द्रियविषयभेदात् ।

दीपिका

सा द्विविधेति । नित्यत्वं = ध्वंसाऽप्रतियोगित्वम् । ध्वंसप्रतियोगित्वम् = अनित्यत्वम् ।

प्रकारान्तरेण विभजते—पुनरिति । आत्मनो भोगायतनं = शरीरम्, यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम्, तदेव-

विवृत्ति

त्वेन तुल्यताऽऽपत्तिरतः कुत्रचिदवयवविश्रामो वक्तव्यः, यत्र विश्रामः सोऽस्माकं परमाणुः, तस्याऽनित्यत्वं तु नाऽऽशङ्कनीयम्, तथा सति तस्य समवायिकारणाऽप्रसिद्ध्या समवायिकारणव्यतिरेकेणापि भावकार्यस्य तस्यो-त्पत्तिस्वीकारे असमवेतभावकार्योत्पत्तिप्रसङ्गः स्यात्, तादृशोत्पत्तेरानुभ-विकत्वाऽभावेनेष्टापत्त्यसंभवादित्याह मूले—नित्या-परमाणुरूपा, अनि-त्या कार्यरूपेति ।

दीपिकायां—ध्वंसेति । प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रति-योगित्वमित्यर्थः, तेन न ध्वंसस्य ध्वंसविरहेऽपि तस्य नित्यत्वाऽऽपत्तिः । अनित्यत्वमपि-प्रागभावप्रतियोगित्व-ध्वंसप्रतियोगित्वाऽन्यतरवत्त्वं वक्तव्यम्, तेन न ध्वंसस्याऽनित्यत्वव्याघात इति संक्षेपः । प्रकारान्तरेण = नित्य-पृथिवीवैलक्षण्येन ॥ विभजते—इति—अनित्यां पृथिवीमित्यनुपज्यते । आत्मनः = जीवस्य । भोगायतनम् = सुखदुःखान्यतर—साक्षात्कारस्याऽव-च्छेदकम् ॥ शरीरमिति । तथा च सुखदुःखान्यतरप्रत्यक्षस्याऽवच्छेदकत्वं, अवच्छेदकतासम्बन्धेन तादृशप्रत्यक्षवत्त्वं, वा शरीरत्वमिति शरीरसामान्य-लक्षणं पर्यवसितमिति भावः ॥ यदवच्छिन्ने = शरीरावच्छिन्ने । आत्मनि = जीवे । भोगः—सुखदुःखान्यतरसाक्षात्कारः । तत् = शरीरम् । भोगाय-

दीपिका

शरीरम्। सुखदुःखान्यतरसाक्षात्कारो-भोगः। शब्देतरोद्भूतविशेष-गुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्—इन्द्रियत्वम्।

विवृतिः

तनम् = तादृशभोगस्याऽवच्छेदकम्॥ भोगपदार्थं व्याचष्टे—सुखेति। 'अहं सुखी'—'अहं दुखी वे'त्याकारकं यत् प्रत्यक्षं तस्यैव भोगपदार्थत्वं ज्ञेयमित्याशयः। क्रमप्राप्तमिन्द्रियलक्षणमाह—शब्देतरेति। शब्देतरे = शब्दभिन्ना ये–उद्भूतविशेषगुणास्तेषामनधिकरणत्वे सति ज्ञानकारणीभूतो यो मनःसंयोगस्तदधिकरणत्वमिन्द्रियत्वमित्यर्थः। ज्ञानकारणमनःसंयोग-स्याऽऽत्मनि सत्त्वात् तत्राऽतिव्याप्तिवारणाय—सत्यन्तम्, तथा च सति ज्ञानसुखादेस्तादृशगुणस्याऽऽत्मनि वर्तमानत्वान्न तत्राऽतिव्याप्तिः। तादृश-विशेषगुणस्य कस्याऽपि कालादावसत्त्वात् तत्राऽतिव्याप्तिवारणाय–विशेष्य-दलम्, कालादौ ज्ञानकारणमनःसंयोगाऽभावात् तदुपादाने नाऽतिव्याप्ति-रिति ध्येयम्। श्रवणेऽव्याप्तिवारणाय–शब्देतरेति। शब्देतराऽनुद्भूतरूपादे-र्विशेषगुणस्य चक्षुरादौ सत्त्वात् तत्राऽव्याप्तिवारणाय—उद्भूतेति। शब्देत-रोद्भूतगुणस्य संयोगादेः सर्वत्रेन्द्रिये वर्तमानत्वादसंभववारणाय—विशेष-पदम्। कालेऽतिव्याप्तिवारणाय–ज्ञानकारणेति। ज्ञानकारणसंयोगाश्रयेन्द्रि-याऽवयववारणाय–मनःपदम्। न च—आत्माऽन्यत्वे सति ज्ञानकारणमनः-संयोगाश्रयत्वमेवेन्द्रियत्वं लाघवादस्त्विति—वाच्यम्। तथानिवेशाऽभि-प्रायेण तादृशाऽनाश्रयत्वस्याऽभिहितत्वादिति वदन्ति। अन्ये तु—ज्ञान-मात्रहेतुकचर्ममनःसंयोगाऽऽश्रय– चर्मण्यतिव्याप्तिवारणाय–शब्देतरेत्यादिक-मभिहितमित्यप्याहुः, तदपि सुधीभिर्विभावनीयम्। केचित्तु—आत्मत्वस्ये-श्वरसाधारणजातित्वे मानाऽभावात् तत्तदात्मभेदकूटस्याऽवश्यं निवेशनीय-तया लाघवाऽनवकाशात् तावत्पर्यन्ताऽनुधावनमित्याहुः॥

शरीरमस्मदादीनाम् । इन्द्रियं-गन्धग्राहकं घ्राणं नासाग्रवर्ति।

दीपिका

शरीरेन्द्रियभिन्नो–विषयः । एवञ्च गन्धवच्छरीरं–पार्थिवशरीरम्, गन्धवदिन्द्रियं–पार्थिवेन्द्रियम्, गन्धवान् विषयः–पार्थिवविषयः, इति तत्तल्लक्षणं बोध्यम् । पार्थिवं शरीरं दर्शयति—शरीरमिति । इन्द्रियं दर्शयति–इन्द्रियमिति । गन्धग्राहकमिति–प्रयोजनकथनम्।

विवृतिः

क्रमप्राप्तं विषयपदार्थं दर्शयति—शरीरे-इति । शरीरभिन्नत्वे सतीन्द्रियभिन्नत्वे च सति कार्यत्वं विषयत्वमित्यर्थः ॥ ननु केदारीविनाशेऽपि उपलभ्यमानानामस्मदादिशरीराणां किं लक्षणमित्यत आह–एवं चेति । पूर्वोक्तलक्षणानां शरीरादिसामान्यलक्षणपरत्वे चेत्यर्थः। गन्धवदिति । तथा च भोगावच्छेदकत्वे सति गन्धवत्त्वं—पार्थिवशरीरत्वमिति भावः । गन्धवत्त्वे सति यथोक्तेन्द्रियत्वं—पार्थिवेन्द्रियत्वं घ्राणत्वमिति यावत् । न च—घ्राणेन्द्रियस्य गन्धवत्त्वमप्रामाणिकमिति–वाच्यम् । 'द्रव्यत्वे सति यद्गन्धमात्रग्राहकं तद्—अवश्यं गन्धवद्भवति, यथा गोघृतादिकम्'—इत्यनुमानेन घ्राणेन्द्रिये गन्धवत्त्वस्य निश्चेतुं शक्यत्वादिति ध्येयम् । गन्धवत्त्वे सति कार्यत्वे च सति उपभोगप्रयोजकत्वं–पार्थिवविषयत्वम् । शरीरादीनां निरुक्तविषयत्वसंभवेऽपि भेदेन तेषां निरूपणं शिष्यबुद्धिवैशद्यार्थमित्यवधेयम् ॥ तत्तल्लक्षणम् = पार्थिवशरीरेन्द्रियविषयलक्षणम् । प्रयोजनकथनमिति । गन्धप्रत्यक्षप्रयोजनकं घ्राणमित्यर्थः । उत्तरत्र = जलादौ ॥ इदन्तु बोध्यम् । 'पृथिवीत्वं यदि जातिर्नस्यात्–तदा गन्धसमवायिकारणतावच्छेदकमपि न स्या' दित्यापाद्याभावेन पृथिवीत्वे आपादकाऽभावस्य जातित्वस्वरूपस्य सिद्धिर्भवति, तत्सिद्धौ च सर्वत्र घटपटादौ 'पृथिवी'त्यनुगत-व्यवहारोऽपि सुघट एवेति।

विषयो-मृत्पाषाणादिः ।

शीतस्पर्शवत्य-आपः । ता द्विविधाः । नित्या अनित्याश्च । नित्याः-परमाणुरूपाः । अनित्याः-कार्यरूपाः । पुनस्त्रिविधाः-शरीरेन्द्रियविषयभेदात् । शरीरं-वरुणलोके । इन्द्रियं-रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः-सरित्समुद्रादिः ।

दीपिका

घ्राणमिति संज्ञा । नासाग्रेति—आश्रयोक्तिः । एवमुत्तरत्र ज्ञेयम् । पार्थिवविषयं दर्शयति—मृत्पाषाणेति ।

अपां लक्षणमाह—शीतेति । उत्पन्नविनष्टे जलेऽव्याप्तिवारणाय 'शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वं' तात्पर्यम् ॥

विवृतिः

अपां = जलानां । लक्षणमिति । शीतस्पर्शवत्त्वं—जलत्वमिति पर्यवसितं जललक्षणमाहेत्यर्थः । जलेऽपि चतुर्दशगुणा वर्तन्ते,—ते च रूप-रस-स्नेह-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्व-द्रवत्व-गुरुत्व-वेगाख्यसंस्कारा इति ॥ अव्याप्तिवारणायेति । शीतस्पर्शवत्त्वरूपजललक्षणस्योत्पन्नविनष्टे जले विरहात्—अव्याप्तिः, तद्वारणायेत्यर्थः ॥ शीतस्पर्शेति । शीतस्पर्शाधिकरणे वर्तमाना या द्रव्यत्वाऽपेक्षयाऽल्पदेशस्था जातिस्तद्वत्त्वमेव जलस्य पर्यवसितं लक्षणमित्यर्थः । पृथिवीत्वादिकमादाय पृथिव्यादावतिव्याप्तिवारणाय सामानाधिकरण्यान्तं जातिविशेषणम् । शीतत्वमपि—स्पर्शविशेषणं तत्रैवाऽतिव्याप्तिवारणाय बोध्यम् । सत्ताजातिमादाय गगनादावतिव्याप्तिवारणाय—द्रव्यत्वाऽपरेति । द्रव्यत्वमादाय तत्रैवाऽतिव्याप्तिवारणाय—द्रव्यत्वेति । जलपृथिव्यन्यतरत्वमादाय पृथिव्यामतिव्याप्तिवारणाय—जातिपदमिति ध्येयम् ।

उष्णस्पर्शवत्-तेजः । तच्च-द्विविधम् । नित्यमनित्यं च । नित्यं-परमाणुरूपम् । अनित्यं-कार्यरूपम् । पुनस्त्रिविधं-शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं-रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधो-

दीपिका

'शीतं शिलातलम्' इत्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः । अन्यत् सर्वं पूर्वरीत्या व्याख्येयम् ॥

तेजसो लक्षणमाह—उष्णस्पर्शवदिति । 'उष्णं जलमि'ति

विवृतिः

ननु पृथिवीत्वमपि शीतस्पर्शसमानाधिकरणमेव, 'शीतं शिलातल'मित्यादिप्रत्ययाऽनुरोधेन शीतस्पर्शवत्त्वस्य शिलातले सत्त्वादत आह-शीतमिति । इत्यादौ = इत्यादिप्रतीतौ । शीतस्पर्शभानम् = शीतस्पर्शविषयत्वम् । तथा च शीतस्पर्शो जलस्यैव न तु शिलातलस्येति भावः नाऽतिव्याप्तिरिति । 'शीतं शिलातल' मितिप्रतीतिबलात् तादृशपृथिवीत्वजातिमादाय शिलातलादिरूपपृथिव्यां अतिव्याप्तिर्न संभवतीत्यर्थः । अन्यदिति । तथा च शीतस्पर्शवत्त्वे सति भोगावच्छेदकं शरीरं जलीयशरीरम्, शीतस्पर्शवत्त्वे सति रसमात्रग्राहकमिन्द्रियं 'रसना'-नामकं जलीयेन्द्रियम्, शीतस्पर्शवत्त्वे सति कार्यत्वे च सति उपभोगसाधनं विषयात्मकं जलम् सरित्-समुद्रादिकं यथायथं बोध्यमित्याशयः ।

लक्षणमाहेति । उष्णस्पर्शवत्त्वं तेजःसामान्यलक्षणं पर्यवसितमिति भावः । तेजसि रूप-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्व-द्रवत्व-वेगाख्यसंस्कारा एकादशगुणा बोध्याः । अत्राऽपि 'उष्णस्पर्शसमानाधिकरण-द्रव्यत्वाऽपरजातिमत्त्वमेव तेजोलक्षणं वक्तव्यम्, तेन नोत्पन्नविनष्टतेजसि-अव्याप्तिः ॥ जलेऽतिव्याप्तिं वारयति—उष्णमिति

भौमदिव्यौदर्याकरजभेदात्। भौमं वह्न्यादिकम्। अबिन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरौदर्यम्। आकरजं-सुवर्णादि।

दीपिका

प्रतीतेस्तेजःसम्बन्धानुविधायित्वात् नातिव्याप्तिः। विषयं विभजते—भौमेति। ननु 'सुवर्णं—पार्थिवम्—पीतत्वात्, गुरुत्वात्, हरि-

विवृतिः

तेजःसम्बन्धाऽनुविधायित्वात् = तेजःसम्बन्धवशात्, तन्निबन्धनादिति यावत्॥ नाऽतिव्याप्तिरिति। तथा चोक्तप्रतीतिरुष्णस्पर्शवत्त्वं जले नाऽवगाहते, अपि तु तेजस्येव, 'नोष्णस्पर्शवत्त्वं' 'निरुक्तलक्षणं' वा जलेऽतिव्याप्तमिति भावः॥ एवम्—उष्णस्पर्शवत्तादृशशरीरं तैजसशरीरम्, उष्णस्पर्शवद्रूपग्राहकमिन्द्रियं तैजसेन्द्रियम्, उष्णस्पर्शवान् विषयस्तैजसविषय इत्यादिकं स्वयमूहनीयम्। सुवर्णादीनां विषयात्मकतेजसां उष्णस्पर्शाऽनुपलब्धिस्तु पृथिवीस्पर्शेनाऽभिभूततयैवेति मन्तव्यम्॥

मूले—भौममिति। भूमि-स्थितमित्यर्थः॥ अबिन्धनमिति। आपो = मेघादयः इन्धनम् = परस्परघर्षणसम्पादनेन इन्धनीभूता यस्य तादृशं विद्युदादीत्यर्थः। भुक्तस्य = वस्तुनः, परिणामहेतुः = परिपाककारणम्। औदर्यम् = उदरे स्थितमित्यर्थः। आकरजं = खनिजम्।

दीपिकायां—नन्विति। पार्थिवम् = पृथिव्यात्मकम्॥ पीतत्वादिति। 'यो यः पीतः स पार्थिवः, यथा हरिद्रादि'रित्यनुमानेन सुवर्णे पृथिवीत्वसिद्धिरित्याशयः॥ हेत्वन्तरेणाऽपि पृथिवीत्वसिद्धिमाह—गुरुत्वादिति। तथा च गुरुत्वादेः पृथिव्यादिकार्यत्वात् तेन हेतुना पृथिवीत्वस्यैव सुवर्णे सिद्धिः ततस्तेनाऽनुमितेन हेतुना—पार्थिवत्वेन तेजस्त्वाऽभावस्य सिद्धिरिति भावः। युक्त्यन्तरेण सुवर्णे पृथिवीत्वाभावनिश्चये

दीपिका

द्रावद्' इति चेन्न । अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाश-दर्शनेन, जलमध्यस्थघृते द्रवत्वनाशादर्शनेन, असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्य्यकारणभावावधारणात्, सुव-र्णस्य अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वे पार्थिवत्वानुपपत्तेः तस्मात् पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्र-

विवृतिः

पृथिवीत्वसिद्धिर्न भवतीति प्रथमतस्तत्र पृथिवीत्वाऽभावसिद्धौ युक्तिमाह-अत्यन्तेति । द्रवत्वनाशदर्शनेन = तारल्यविनाशदर्शनेन । असतीति प्रतिबन्धकाऽसमवधाने-इत्यर्थः ॥ पार्थिवेति । घृतादीनां द्रवत्वनाशा-ग्निसंयोगयोरित्यर्थः ॥ कार्येति । यथाक्रमं—पार्थिवद्रवत्वनाशस्य कार्यत्वं प्रतिबन्धकाऽसहकृताऽग्निसंयोगस्य कारणत्वमित्यनयोर्निश्चयादित्यर्थः, तथा च—पार्थिवद्रवत्वनाशं प्रति प्रतिबन्धकाऽसहकृताऽग्निसंयोगः कारणमिति भावः ॥ अनुच्छिद्येति । अनुच्छिद्यमानम् = अग्निसंयोगाऽविनाश्यम्, यद् द्रवत्वं तदधिकरणत्वादित्यर्थः । पार्थिवत्वाऽनुपपत्तेः = पार्थिवत्वाऽभा-स्यैवोपपत्तेः । अयम् भावः—अग्निसंयोगोच्छिद्यमानद्रवत्वस्य तादृशद्रवत्व-समानाधिकरणाऽपरजातिमत्त्वरूपस्य पार्थिवत्वव्यापकतया तदभावस्य अग्निसंयोगानुच्छिद्यमानद्रवत्वाऽधिकरणत्वात्मकस्य व्यापकाऽभाव-रूपतया तेन च हेतुना पार्थिवत्वाऽभावनिश्चये न केनाऽपि हेतुना सुवर्णे पार्थिवत्वाऽनुमितिसंभवः, बाधनिश्चयस्य सर्वहेतुकाऽनुमितिप्रतिबन्धक-त्वादिति ॥ तस्मादिति = पार्थिवत्वाऽभावनिश्चयादित्यर्थः ॥ पीतद्रव्येति । पीतद्रव्यस्य यद् द्रवत्वं तस्य विनाशप्रतिबन्धकतयैवेत्यर्थः । तथा च 'पीतद्रव्यम्-अग्निसंयोगसमवधानेऽपि द्रवत्वनाशप्रतिबन्धक-द्रवद्रव्यान्तर-संयुक्तम्,—अग्निसंयोगाऽनुच्छिद्यमानद्रवत्ववत्त्वे सति गरुत्वात्' इत्यनु-मानेन सुवर्णस्य तैजसत्वसिद्धिरिति भावः ॥ नन्वस्तु तादृशद्रवद्र-

रूपरहितः स्पर्शवान्-वायुः। स द्विविधः—नित्योऽनि-

दीपिका

द्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः, रूपवत्तया वाय्वादिषु अनन्तर्भावात् तैजसत्वसिद्धिः। तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धात् अनुपलब्धिः। तस्मात् सुवर्णं तैजसमिति सिद्धम्॥

वायुं निरूपयति—रूपरहितेति। आकाशादावतिव्याप्तिवार-

विवृतिः

जलादिकमेवेत्यत आह—नैमित्तिकेति। तथा च—'तादृशं द्रवद्रव्यं न जलं,—नैमित्तिकद्रवत्ववत्त्वात्, नवा वाय्वादिस्वरूपम्,—रूपवत्त्वात्, अतः परिशेषेण तस्य तैजसत्वमेव स्वीकर्तव्यम्, तादृशं च तैजसं द्रवद्रव्यं सुवर्णमेवेत्याशयः।

ननु सुवर्णस्य तैजसत्वे तत्रोष्णस्पर्शादिकं कथं नोपलभ्यते, इत्यत आह—तस्येति। सुवर्णस्येत्यर्थः॥ उपष्टंभक-पार्थिव-रूपस्पर्शाभ्याम् = अभिभवकारकपृथिवीरूपस्पर्शाभ्याम्॥ प्रतिबन्धादिति। स्वीयरूपाद्युपलब्ध्यजननादित्यर्थः॥ अनुपलब्धिरिति। उष्णस्पर्शादीनामित्यादिः॥ उपसंहरति—तस्मादिति। पूर्वोक्तयुक्त्यनुसारादित्यर्थः॥

वायुं निरूपयतीति। वायुविषयकज्ञानाऽनुकूलव्यापारवान् मूलकार इत्यर्थः॥ अतिव्याप्तिवारणायेति। रूपरहितत्वमात्रस्य वायुलक्षणत्वे

न्यायबोधिनी

एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति—रूपरहित-इति। रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। सति—सप्तम्या विशिष्टार्थकतया 'रूपरहितत्वविशिष्टस्पर्शवत्त्वं' वायोर्ल। विशेषलक्षणम्-

त्यश्च । नित्यः-परमाणुरूपः । अनित्यः-कार्यरूपः । पुनस्त्रिविधः-शरीरेन्द्रियविषयभेदात् । शरीरं-वायुलोके । इन्द्रियं-स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसंचारी वायुः-प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते ।

दीपिका

णाय-स्पर्शवानिति । पृथिव्यादावतिव्याप्तिवारणाय-रूपरहितेति ।

ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह-शरीरेति । स चेति ।

विवृतिः

आकाशादीनामपि रूपरहितत्वात् तत्राऽतिव्याप्तिस्तद्वारणायेत्यर्थः ॥ स्पर्शवानितीति । तथा चाऽऽकाशादौ रूपरहितत्वसत्त्वेऽपि स्पर्शवत्त्वविरहात् तत्राऽतिव्याप्तिरिति भावः । नन्वस्तु स्पर्शवत्त्वमात्रमेव वायोर्लक्षणमत आह—पृथिव्यादाविति ॥ अतिव्याप्तिरिति । स्पर्शवत्त्वस्य पृथिव्यादावपि सत्त्वादित्याशयः । रूपरहितत्वनिवेशाच्च पृथिव्यां रूपरहितत्वविरहादेव नाऽतिव्याप्तिरित्याह—रूपरहितेति । न चोत्पत्तिकालीनाऽनिलादावव्याप्तिवारणाय स्पर्शवत्त्वपदेन स्पर्शसमानाऽधिकरणद्रव्यत्वाऽपरजातिमत्त्वस्य स्पर्शोपलक्षितत्वस्य वाऽवश्यं विवक्षणीयतया उत्पत्तिकालीन-

न्यायबोधिनी

णांशाऽनुपादानेस्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः, तद्वारणाय—विशेषणोपादानम् । तावन्मात्रोपादाने आकाशादावतिव्याप्तिः, तद्वारणाय-विशेष्योपादानम् । अतिव्याप्तिर्नाम-अलक्ष्ये लक्षणसत्त्वम् , यथा गोः 'शृङ्गित्वं लक्षणं कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात् । अन्या-

दीपिका

एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैर्व्यवह्रियत इत्यर्थः ॥

स्पर्शानुमेयो वायुः, तथा हि—योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शो भासते—'स स्पर्शः-क्वचिदाश्रितः-गुणत्वात्, रूपवत्'। न चास्य पृथिवी आश्रयः, उद्भूतस्पर्शवतः पार्थिव-

विवृतिः

घटादावतिव्याप्तिः, तत्र रूपशून्यत्वाऽऽत्मकस्य रूपरहितत्वस्य निरुक्तस्पर्शवत्त्वस्याऽपि सत्त्वादिति—वाच्यम्। रूपरहितत्वपदेन रूपवद्भिन्नत्वस्य रूपोपलक्षितभिन्नत्वस्य वा विवक्षणीयत्वादिति-ध्येयम् ॥ प्राणस्य = प्राणवायोः। स्थानभेदात् = मुखादिस्थानभेदात् ॥ प्राणाऽपानादीति। आदिपदात्-समानोदानव्यानपरिग्रहः, तथा च प्राणादिर्विपर्यात्मक एव वायुरिति भावः ॥ वैशेषिकमतमाह—स्पर्शाऽनुमेय इति ॥ वाति सति = प्रवहति सति ॥ भासत इति। अनुभवविषयो भवतीत्यर्थः ॥

ननु—उक्तस्पर्शाऽऽश्रयत्वं पृथिव्यामेव पर्यवसितं भवतु, इत्यत आह—न चाऽस्येति। पूर्वोक्तस्पर्शस्येत्यर्थः। उद्भूतस्पर्शवतः = प्रत्यक्षविषयीभूतस्पर्शाऽधिकरणस्य। उद्भूतरूपवत्त्वनियमात् = तादृशरूपाऽधिकरणताया नियमेन सत्त्वात्। तथा च—'पृथिवी-निरुक्तस्पर्शवद्भिन्ना,—उद्भूतरूपवत्त्वात्'। 'निरुक्तस्पर्शो वा—न पृथिव्याश्रितः,-रूपवदवृत्तित्वात्' इत्यनुमानस्य पृथिव्याश्रितत्वसिद्धौ प्रतिबन्धकतया न तत्सिद्धिरिति भावः ॥

न्यायबोधिनी

प्तिर्नाम-लक्ष्यैकदेशाऽवृत्तित्वम्, लक्ष्यैकदेशे—लक्ष्यतावच्छेदकाश्रयीभूतकचिल्लक्ष्ये,-लक्षणाऽसत्त्वमव्याप्तिरित्यर्थः, यथा गोर्नीलरूपवत्त्वं' लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवि अव्याप्तिस्तत्र नीलरूपाभावात्। असंभवो नाम-लक्ष्यमात्रे कुत्रापि लक्षणाऽसत्त्वम्,

दीपिका

स्योद्भूतरूपवत्त्वनियमात् । न जलतेजसी, अनुष्णाशीतत्वात् न विभुचतुष्टयम्, सर्वत्रोपलब्धिप्रसङ्गात् । न मनः, परमाणु

विवृतिः

नन्वस्तु जलादिकमेव तादृशस्पर्शाऽधिकरणमित्यत आह—नेति । तथा च 'निरुक्तस्पर्शो—न जलवृत्तिः—न वा तेजोवृत्तिः,—अनुष्णाशीतस्पर्शत्वात् रूपवदवृत्तित्वाद्वा'—इत्यनुमानं जलाद्याश्रितत्वसिद्धौ बाधकमिति हृदयम्।

न विभुचतुष्टयम् =नाऽऽकाशकालदिगात्मनां प्रत्येकव्यक्त्याश्रयीभूतम् सर्वत्रेति । सर्वस्मिन् देशे काले चेत्यर्थः । उपलब्धिप्रसङ्गादिति निरुक्तस्पर्शस्य अनुभवप्रसङ्गादिति भावः । तथा च 'निरुक्तस्पर्शो यद्याका शादिवृत्तिः स्यात् तदा सर्वत्रोपलब्धिविषयः स्यात्, यतो न, अतो नाऽऽकाशादिवृत्तिरिति भावः । वस्तुतः—'निरुक्तस्पर्शः—नाऽऽकाशादिसम वेतः,—त्वगिन्द्रियग्राह्यत्वात्,—जलत्ववदि'त्यनुमानमेव आकाशाद्याश्रि त्वसिद्धौ बाधकमिति मन्तव्यम् ॥ ननु मनस्येवाऽस्तु तादृशस्पर्श इत्यत आह—न मन इति । तथा च—'निरुक्तस्पर्शो—न मनःसमवेतः, बहिरि न्द्रियग्राह्यत्वात्,—रूपवदि'त्यनुमानं मनसि तादृशस्पर्शाश्रयत्वसिद्धौ बाध

न्यायबोधिनी

यथा गोरेकशफवत्त्वम्' गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वात्। अतिव्याप्त्यव्याप्त्यसंभवानां निष्कृष्टलक्षणानि—लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्न

---

लक्ष्यतेति । लक्ष्यताच्छेदकीभूतो यो धर्मस्तद्धर्माधिकरणवृत्तित्वे सति तादृशधर्मावच्छिन्नप्रतियोगिताको यो भेदस्तदधिकरणवृत्तित्वम्=अतिव्याप्तिरित्यर्थः यथा—शृङ्गित्वं' गोलक्षणमतिव्याप्तं, तच्च लक्ष्यतावच्छेदकगोत्वाधिकरणे गवि वर्तमानं सत्, तादृशगोत्वावच्छिन्नप्रतियोगिताको यो भेदः 'गौर्नै' त्याकारक

दीपिका

स्पर्शस्यातीन्द्रियत्वात्। तस्माद् यः प्रतीयमानस्पर्शाश्रयः स वायुः॥ ननु 'वायुः—प्रत्यक्षः—प्रत्यक्षस्पर्शाश्रयत्वात्—घटवदिति' चेन्न। उद्भूतरूपवत्त्वस्योपाधित्वात्। 'यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं, तत्र उद्भूतरूपवत्त्वम्' इति घटादौ साध्यव्यापकत्वम्,

विवृतिः

कस्मिस्याशयः॥ उपसंहरति—तस्मादिति। निरुक्तेतरबाधबलादित्यर्थः। प्रतीयमानस्पर्शाश्रयः = प्रत्यक्षविषयीभूतनिरुक्तस्पर्शाश्रयः। एवम्—शब्द-धृति-कम्पाऽनुमेयोऽपि वायुर्बोध्यः। शङ्कते—नन्विति। प्रत्यक्षः = प्रत्यक्ष-विषयः। प्रत्यक्षस्पर्शाश्रयत्वात् = प्रत्यक्षविषयीभूतस्पर्शाश्रयत्वात्॥ ननु—प्रत्यक्षत्वस्याऽऽत्मन्यपि सत्त्वेन तत्रोद्भूतरूपवत्त्वाऽभावात् उद्भूतरूपवत्त्वस्य साध्याऽव्यापकतया उपाधित्वमेव न संभवतीत्यत आह—यत्रेति। यस्मि-न्नधिकरणे—इत्यर्थः॥ द्रव्यत्वेति। द्रव्यत्वविशिष्टबहिरिन्द्रियजन्यलौकिक-प्रत्यक्षविषयत्वमित्यर्थः। तेन ना'ऽऽत्मकालीनोऽयं घट' इत्याकारकाऽलौकिक-चाक्षुषविषये—आत्मनि उद्भूतरूपाऽभावसत्त्वेऽपि क्षतिः। तत्र = तस्मिन्न-धिकरणे। इति = इत्याकारकसहचारग्रहात्। घटादावित्यादिना पटादि-

न्यायबोधिनी

प्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः। अव्याप्तिस्तु—लक्ष्य-तावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्। असंभवस्तु लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्॥

---

स्तदधिकरणेऽपि महिषादौ वर्तमान इति बोध्यम्॥ लक्ष्यतावच्छेदकधर्माधिकरणे वर्तमानो योऽत्यन्ताभावस्तत्प्रतियोगित्वम्—अव्याप्तिः, यथा—'नीलरूपवत्त्वं' गोलक्षणं, तस्य लक्ष्यतावच्छेदक-गोत्वाधिकरणे शुक्लगवि वर्तमानो योऽत्यन्ताभावो 'नीलरूपवत्त्वं नास्ती'त्याकारकस्तत्प्रतियोगित्ववत्त्वेनाऽव्याप्तत्वात्॥ लक्ष्य-

दीपिका

पक्षे साधनाव्यापकत्वम् । न चैवं तप्तवारिस्थतेजसोऽपि अप्रत्यक्षत्वापत्तिः, इष्टत्वात् । तस्मात् रूपरहितत्वात् वायुरप्रत्यक्षः ॥

विवृतिः

परिग्रहः । व्यापकत्वम् = व्यापकत्वनिश्चयः । पक्षे = वायौ ॥ साधनेति । तथा च प्रत्यक्षस्पर्शाऽश्रयत्वस्य वायौ सत्त्वात् तत्रोद्भूतरूपविरहात् उद्भूतरूपवत्त्वे न हेतुव्यापकत्वं संभवतीति भावः ।

एवं च निरुक्तोद्भूतरूपात्मकोपाधिविरहेण वायौ बहिरिन्द्रियजन्यप्रत्यक्षत्वाऽभावस्याऽपि निश्चेतुं शक्यतया न बहिरिन्द्रियजन्यप्रत्यक्षत्वंरूपस्य साध्यस्य तत्र सिद्धिरित्यवधेयम् ॥ एवम् = उद्भूतरूपवत्त्वस्य बहिरिन्द्रियजन्यप्रत्यक्षत्वप्रयोजकत्वे । तप्तवारिस्थतेजसः = तप्तजलसम्बन्धिवह्नेः । अप्रत्यक्षत्वमिति । तथा च तादृशतेजसि तादृशप्रत्यक्षत्वप्रयोजकस्य उद्भूतरूपवत्त्वस्याऽभावात्प्रत्यक्षत्वमपि तस्य न स्यादिति भावः ॥ इष्टत्वादिति । तथा च तादृशवह्नेरप्रत्यक्षत्वमिष्टमेवेति भावः ॥ तस्मादिति । तादृशोपाधिसत्त्वादित्यर्थः । रूपरहितत्वात् = उद्भूतरूपस्वरूपोपाधेरभाववत्त्वात् । अप्रत्यक्षः = प्रत्यक्षविषयत्वाऽभाववान् । व्यापकस्य निरुक्तोपाधेरभाववत्त्वेन व्याप्यस्य तादृशप्रत्यक्षविषयत्वस्याऽभाववत्त्वं वायौ सर्वसम्मतमित्याशयः । नवीनाः—पुनरुद्भूतरूपवत्त्वं तादृशस्पर्शवत्त्वं वा न बहिरिन्द्रियजन्यप्रत्यक्षे कारणम्, किन्त्वात्मावृत्तिविशेषगुणवत्त्वमेव तथा, तथा च प्रभाया इव वायोरपि प्रत्यक्षत्वमिष्टमेवेति—प्राहुरित्यास्तां विस्तरः ।

---

तावच्छेदकीभूतधर्माधिकरणे वर्तमानो योऽभावस्तदप्रतियोग्यभावप्रतियोगित्वम्-असम्भवः, भवति हि एकशफत्वमसम्भवदोषग्रस्तम् लक्ष्यतावच्छेदक-गोत्वव्यापकैकशफत्वाभावप्रतियोगित्वस्यैकशफत्वे सत्त्वात् ।

दीपिका

इदानीं कार्य्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते। ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते, ततः परमाणुद्वय-संयोगे सति द्व्यणुकमुत्पद्यते, त्रिभिर्द्व्यणुकैः त्र्यणुकम्, एवं चतुरणुकादिक्रमेण महापृथिवी, महत्य आपः, महत् तेजः, महान् वायुः, उत्पद्यते। एवमुत्पन्नस्य कार्य्यद्रव्यस्य संजिहीर्षावशात् क्रियया परमाणुद्वयविभागे सति द्व्यणुकनाशः, ततः त्र्यणुकस्य, ततश्चतुरणुकस्य, इत्येवं पृथिव्यादिनाशः, (परमाण्वाख्यस्य समवायि-कारणस्य नित्यत्वात्) असमवायिकारणनाशाद् द्व्यणुकनाशः, समवा-

विवृतिः

इदानीमिति। अवसरसंगत्येत्यादिः। कार्यरूपपृथिव्यादिचतुष्ट-यस्य = जन्यपृथिवीजलतेजोऽनिलचतुष्टयस्य। उत्पत्तिविनाशक्रमः = प्रथम-मुत्पत्तिक्रमः, ततो विनाशक्रमः। कथ्यते = निरूप्यते। पृथिव्यादीना-मुत्पत्तिक्रममाह—ईश्वरस्येति। चिकीर्षावशात् = प्रयत्नविषयकेच्छातः। परमाणुषु = पृथिव्यादिपरमाणुषु। ततः = क्रियातः। परमाणुद्वयसंयोगे सति = परमाणुद्वयसंयोगोत्पत्तौ सत्याम्। द्व्यणुकमुत्पद्यत इति। तादृशसंयोगादित्यादिः। आपो = जलानि। विनाशक्रममाह—एवमिति। कार्यद्रव्यस्य = जन्यपृथिव्यादेः। संजिहीर्षावशात् = संहारेच्छातः॥ क्रिययेति। उत्पद्यमानेत्यादिः। परमाणुद्वयविभागे सति = परमाणुद्वय-विभागोत्पत्तौ सत्याम्। द्व्यणुकनाश इति। तादृशविभागादित्यादिः। ततः—द्व्यणुकनाशतः, त्र्यणुकस्य नाश इत्यनुपज्यते, एवमग्रेऽपि। इति = एवं क्रमेण॥ पृथिव्यादिनाश इति। आदिना—जलादिपरिग्रहः। असमवायिकारणनाशात् = असमवायिकारणस्य परमाणुद्वयसंयोगस्य नाशात्। समवायिकारणनाशात् = त्र्यणुकस्य समवायिकारणं यद् द्व्यणुकं तस्य नाशात्। अनियतानां कार्यद्रव्यनाशकत्वकल्पनात् 'सम्प्रदाय'

दीपिका

यिकारणनाशात् त्र्यणुकनाश इति सम्प्रदायः। सर्वत्र असमवायिकारणनाशाद् द्रव्यनाश इति-नवीनाः॥ किं पुनः परमाणुसद्भावे प्रमाणम्? उच्यते, जालसूर्यमरीचिस्थं सूक्ष्मतमं यद् दृश्यते-'तत्-सावयवं-चाक्षुषद्रव्यत्वात्-पटवत्' 'त्र्यणुकावयवो

विवृतिः

इत्युक्तम्॥ नवीनमतमाह—सर्वत्रेति। जन्यद्रव्यनाशस्थले-इत्यर्थः। असमवायिकारणनाशात् = असमवायिकारणस्य अवयवद्वयसंयोगादेर्नाशात्। द्रव्यनाशः = कार्यद्रव्यनाशः। क्रियानाशेऽपि संयोगादेरविनाशात् 'द्रव्यनाशे'-त्युक्तम्॥ नन्वस्तूक्तक्रमेण सर्वमेव पृथिव्यादिकमनित्यम्, न तु-नित्यमपि परमाण्वादिस्वरूपमतिरिक्तं किञ्चिदस्तीत्याशङ्क्या पृच्छति-किं पुनरिति। उत्तरयति—उच्यत इति। प्रमाणमुच्यत इत्यर्थः।

जालेति। जालान्तरगतसूर्यकिरणस्थितमित्यर्थः। यद् रजः= त्र्यणुकात्मकं, तत् = त्र्यणुकम्, सावयवम् = अवयवेन सह वर्तमानम्। चाक्षुषद्रव्यत्वादिति। चक्षुरिन्द्रियजन्यप्रत्यक्षविषयीभूतद्रव्यत्वादित्यर्थः। आत्मादौ व्यभिचारवारणाय-चाक्षुषेति। रूपादौ व्यभिचारवारणाय-द्रव्यत्वेति। 'पटवदि'ति दृष्टान्तानुसरणम्, तथा च 'यद्यच्चाक्षुषं द्रव्यं भवति तदवश्यं सावयवं भवति यथा पट'इति व्याप्त्या त्र्यणुके साऽवयवत्वसिद्धिरिति भावः॥ नन्वस्तु त्र्यणुकाऽवयवस्य द्व्यणुकस्य सिद्धिः, तथापि न परमाणुसद्भाव इत्यत आह—त्र्यणुकाऽवयवोऽपीति। द्व्यणुकमित्यर्थः। महदारम्भकत्वात् = महतस्त्र्यणुकस्य य आरंभः = समवायेनोत्पादः तज्जनकत्वात्, महतः समवायिकारणत्वादिति यावत्। महत्त्वमात्रस्य—आरम्भकत्वमात्रस्य वा हेतुत्वे गगनादौ व्यभिचारः, अतो महदारम्भकत्वादित्युक्तम्। 'तन्तुवदि'ति दृष्टान्तानुसरणम्, तथा च-"यद्यन्महतो द्रव्यस्य समवायिकारणं भवति तदवश्यं साऽवयवं भवति

दीपिका

पि—सावयवः—महदारम्भकत्वात्—तन्तुवत्' यो द्व्यणुकावयवः स एव—परमाणुः, स च नित्यः, कार्य्यत्वेऽनवस्थाप्रसङ्गात्, तथा च मेरुसर्षपयोरपि तुल्यपरिमाणापत्तेः ॥ सृष्टिप्रलयसद्भावे किं प्रमाणमिति चेन्न। "धाता यथापूर्वमकल्पयदि"ति श्रुतिः प्रमाणम्। 'सर्वकार्य्यद्रव्यध्वंसोऽवान्तरप्रलयः, सर्वभावकार्य्यध्वंसो महाप्रलयः' इति विवेकः।

विवृतिः

यथा तन्त्वादिक'मिति व्याप्त्या त्र्यणुकाऽवयवे साऽवयवत्वसिद्धिरिति भावः ॥

ननु त्र्यणुकावयवस्य द्व्यणुकस्याऽवयवसिद्धावपि न परमाणुसिद्धिरित्यत आह—यः इति। परमाणुः = परमाणुपदप्रतिपाद्यः ॥ कार्यत्व इति। तस्येत्यादिः। निरुक्तक्रमेण साऽवयवत्वे सिद्धे इत्यर्थः ॥ अनवस्थाऽऽपातादिति—क्रमेण सावयवत्वधाराप्रसंगः स्यादिति भावः ॥ ननु प्रामाणिकीयमनवस्था स्यादित्यत आह—तथा चेति। निरुक्तक्रमेणाऽवयवधारास्वीकारे च इत्यर्थः ॥ तुल्यपरिमाणापत्तेरिति। तथा च न्यूनाऽधिकावयववतां द्रव्याणां परिमाणभेदकतया सुमेरोरवयवस्य सर्षपावयवस्य च यदि कुत्राऽपि विश्रामो नास्ति तदा तयोः समानावयवत्वेन तुल्यपरिमाणवत्त्वमपि स्यादित्याशयः ॥ पूर्वोक्तोत्पत्तिविनाशे श्रुतिमपि प्रमाणयति—धातेति। ईश्वर इत्यर्थः ॥ यथा पूर्वमिति। सृष्टेरित्यादिः। तथा च—यथा सृष्टेः पूर्वमिदं जगदवस्थितमासीत् तथेदानीमप्यसृजदित्यर्थपर्यालोचनया मध्ये जगतो विनाशस्ततस्तस्योत्पत्तिरिति श्रुत्यैव विनिश्चितमिति भावः ॥

खण्डप्रलय-महाप्रलयलक्षणे क्रमेणाऽऽह—सर्वेति। सर्वेषां जन्यद्रव्याणां यो ध्वंसो = विनाशः तस्याऽधिकरणसमयः खण्डप्रलयः। अधुनाऽपि यत्किञ्चिद्द्रव्यविनाशसत्त्वात्—सर्वेति। नित्यद्रव्याणामविनाशात्—जन्येति। परमाणुरूपादीनां तदानीमपि सत्त्वात्—द्रव्येति ॥ सर्वेति।

शब्दगुणकम्-आकाशम्, तच्चैकं, विभु, नित्यं, च।

दीपिका

आकाशं लक्षयति-शब्दगुणकमिति ॥ ननु किम् आकाश पृथिव्यादिवन्नाना ? नेत्याह—तच्चैकमिति । भेदे प्रमाणाभावा दित्यर्थः ॥ एकत्वादेव सर्वत्रोपलब्धेर्विभुत्वमंगीकर्तव्यमित्याह-

विवृतिः

सर्वेषां भावकार्याणां यो विनाशस्तदधिकरणकालः—महाप्रलय इत्यर्थः यत्किञ्चिद्भावकार्यविनाशस्याऽधुनाऽपि सत्त्वात्—सर्वेति । ध्वंसस्याऽभ वात्मकस्य विनाशाऽसंभवात्—भावेति । नित्यस्याऽपि भावस्य विनाश ऽसंभवात्—कार्येति ध्येयम् ॥

वस्तुतः—जन्यद्रव्याऽनधिकरणत्वं खण्डप्रलयत्वम् । जन्यभावाऽनधि करणत्वं महाप्रलयत्वमित्येवं तत्तत्प्रलयलक्षणमित्यवधेयमिति सङ्क्षेपः ॥

मूले—शब्दगुणकमिति । शब्द एव गुणो-विशेषगुणो यस्य तत् शब्दगुणकमिति व्युत्पत्त्या शब्दमात्रविशेषगुणवत्त्वमित्याकाशलक्षणं पर्य वसितम् । गुणपदं शब्दस्य द्रव्यत्वखण्डनाय, लक्ष्यतावच्छेदक लक्षणयो भेदप्रदर्शनाय च, लक्षणस्य लक्ष्यतावच्छेदकाऽघटकगुणघटितत्वादिति ध्येयम्

आकाशे च शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः षड्गुणा वर्तन्ते। दीपिकायां—लक्षयतीति । लक्षणप्रदर्शनपूर्वकं लक्ष्यीभूतं प्रदर्शय तीत्यर्थः ॥ पृथिव्यादिवदिति । यथा पृथिव्यादिकं नित्याऽनित्यभेदेन द्विविधं तथेत्यर्थः । भेदे = नानात्वे ॥ प्रमाणाऽभावादिति । केनाऽपि

न्यायबोधिनी

आकाशं लक्षयति—शब्दगुणकमिति । 'गुण'—पदमाकाशे शब्द एव विशेषगुण-इति द्योतनाय, न त्वतिव्याप्तिवारणाय, सम वायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात् ॥ तच्चैकमिति । अनेकत्वे

दीपिका

विभु–इति। सर्वमूर्तद्रव्यसंयोगित्वं—विभुत्वम्। मूर्तत्वम्–परिच्छिन्नपरिमाणवत्त्वं, क्रियावत्त्वं वा। विभुत्वादेव आत्मवत् नित्यत्वमित्याह—नित्यश्चेति ॥

विवृतिः

प्रमाणेन तत्र नानात्वं न सेत्स्यतीति भावः। सर्वदेशावच्छेदेनैकस्यैवाऽऽकाशस्योपलब्धत्वात् तस्यैकत्वं विभुत्वमप्यस्तीत्याह-एकत्वादेवेति। सर्वमूर्तेति। सर्वमूर्तद्रव्याणाम् = पृथिवीजलतेजोवायुमनसां यः संयोगस्तदनुयोगित्वमित्यर्थः ॥ ननु विभुत्वघटकीभूतस्य मूर्तत्वस्य ज्ञानं विना विभुत्वज्ञानमेव न संभवतीत्यत आह—मूर्तत्वमिति। परिच्छिन्नपरिमाणवत्त्वम् = अपकृष्टपरिमाणवत्त्वम् ॥ ननूत्पत्तिकालीनघटे तादृशपरिमाणस्याऽसत्त्वात् तत्रोक्तलक्षणमव्याप्तमित्यत आह—क्रियावत्त्वमिति। न च क्रियावत्त्वमप्यनुत्पन्नकर्मकघटादावव्याप्तमिति वाच्यम्। क्रियावत्त्वमित्यनेन क्रियावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। पूर्वलक्षणस्याऽप्युक्तरीत्या निर्दोषत्वसंभवेऽपि गौरवमेव तदुपेक्षाबीजमित्यवधेयम् ॥ विभुत्वादेवेति। तथा च—'आकाशं—नित्यम्, विभुत्वादि'त्यनुमानात् आकाशे नित्यत्वं सिद्धमिति हृदयम्।

न्यायबोधिनी

मानाभावादिति भाव ॥ विभ्विति। सर्वमूर्तद्रव्यसंयोगित्वं= विभुत्वम्। मूर्तत्वं च = क्रियावत्त्वम्। पृथिव्यप्तेजोवायुमनांसि— मूर्तानि। पृथिव्यप्तेजोवाय्वाकाशेतिपञ्चकं—भूतपदवाच्यम्। भूतत्वं नाम = बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥

---

सर्वमूर्तद्रव्यसंयोगित्वमिति। सर्वमूर्तसंयोगानुयोगित्वमित्यर्थः॥बहिरिति। बहिरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमद्गुणवत्त्वं--भूतत्वमित्यर्थः, तेन न

**अतीतादिव्यवहारहेतुः-कालः, स चैको विभुर्नित्यश्च ॥**

दीपिका

कालं लक्षयति—अतीतेति । सर्वाधारः कालः, सर्वकार्ये निमित्तकारणञ्च ॥

विवृतिः

मूले—अतीतादीति । आदिपदात्–वर्तमानादिपरिग्रहः । तत्र चाऽतीतादिव्यवहारकारणत्वमेव कालस्य लक्षणम् । 'अतीतोऽय'मित्यादिशब्दप्रयोगो व्यवहारः, तस्य च कालघटितत्वेन तं प्रति कालस्य हेतुत्वमिति बोध्यम् ॥ कालस्य भेदे प्रमाणाऽभावः,–क्षणादीनामुपाधित्वादित्याह—स चैक इति ॥ सर्वत्रोपलब्धेर्विभुत्वम्, विभुत्वाच्च नित्यत्वमित्याह-विभुर्नित्यश्चेति ॥ काले–संख्या·परिमाण·पृथक्त्व·संयोग·विभागाः पञ्च गुणा ज्ञातव्याः ।

दीपिकायां—सर्वाधार इति । कालिकेनेत्यादिः ! जगतामधिकरणीभूत इत्यर्थः । सर्वकार्ये = कार्यत्वावच्छिन्ने । निमित्तकारणं = प्रयोजकम्, साधारणकारणमिति यावत् ॥

न्यायबोधिनी

कालं लक्षयति—अतीतेति । व्यवहारहेतुत्वस्य लक्षणत्वे 'घट' इति व्यवहारहेतुभूतघटादावतिव्याप्तिः, तद्वारणाय अतीतादीति—विशेषणोपादानम् ।

---

परमाण्वादावव्याप्तिर्न वा 'ज्ञातो घट'इत्याकारकप्रत्यक्षविषयज्ञानवत्त्वमादाय आत्मन्यतिव्याप्तिः ॥

तद्वारणायेति । घटादिवारणायेत्यर्थः । अतीतत्वं = वर्तमानध्वंसप्रतियोगित्वम् ।

प्राच्यादिव्यवहारहेतुर्दिक्, सा चैका, नित्या, विभ्वी, च । ज्ञानाधिकरणमात्मा । स-द्विविधः । जीवात्मा, पर-

दीपिका

दिशो लक्षणमाह—प्राचीति । दिगपि कार्य्यमात्रे निमित्त-कारणम् ॥

आत्मनो लक्षणमाह—ज्ञानेति ॥ आत्मानं विभजते—स

विवृतिः

मूले—प्राच्यादीति । आदिपदात् प्रतीच्यादिपरिग्रहः । तथा च प्राच्यादिव्यवहारकारणत्वमेव दिशो लक्षणं पर्यवसितमिति भावः । यस्य पुरुषस्य उदयगिरिसन्निहिता या दिक् सा—तं प्रति प्राची, एवं तद्व्य-वहिता—प्रतीची, सुमेरुसन्निहिता—उदीची, तद्व्यवहिता—अवाचीति प्राच्यादिव्यवहाराणां दिग्घटितत्वेन तद्व्यवहारे दिशो हेतुत्वमवगन्तव्यम् ॥ प्राच्यादीनां उपाधिस्वरूपत्वात् दिशो भेदे प्रमाणाऽभावादाह—सा-चैकेति ॥ सर्वत्रोपलब्धेर्विभुत्वान्नित्यत्वमपीत्याह—विभ्वी नित्या चेति । दीपिकायां-कार्यमात्र इति । कार्यत्वावच्छिन्नसामान्ये-इत्यर्थः । निमित्तकारणमित्यस्य पूर्ववदर्थो बोध्यः ॥

लक्षणमाहेति । तथा च—ज्ञानाधिकरणत्वमात्मसामान्यलक्षण-मिति भावः ॥ अथ—ज्ञानं द्विविधं—जन्यं नित्यञ्च, तत्र यदि नित्यज्ञा-

न्यायबोधिनी

दिशो लक्षणमाह—प्राच्येति । उदयाचलसंनिहिता या दिक् सा–प्राची । अस्ताचलसंनिहिता या दिक्सा–प्रतीची । मेरोः संनि-हिता या दिक् सा–उदीची । मेरोर्व्यवहिता या दिक् सा–अवाची ॥

आत्मानं निरूपयति—ज्ञानाधिकरणमिति । 'अधिकरण'-

दीपिका

द्विविध इति । परमात्मनो लक्षणमाह—तत्रेति । नित्यज्ञानाधि-
करणत्वम्—ईश्वरत्वम् । ननु ईश्वरस्य सद्भावे किम् प्रमाणं ? न

विवृतिः

नाऽधिकरणत्वं लक्षणं तदा जीवात्मन्यव्याप्तिः, यदि च जन्यज्ञानाऽधि-
करणत्वम्, तदा परमात्मन्यव्याप्तिः, ज्ञानसामान्याधिकरणत्वन्त्वप्रसिद्ध-
मिति चेन्न । स्वावच्छिन्नाऽधिकरणत्वसम्बन्धेन ज्ञानत्ववत्त्वस्यैवाऽत्र
सामान्यलक्षणत्वेन विवक्षितत्वादिति—ध्येयम् ॥ विभजते-इत्यस्य
पूर्ववदर्थो बोध्यः । जीवात्मनि—संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-
बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माऽधर्म-भावनाख्यसंस्काराश्चतुर्दश गुणाः
परमात्मनि च संख्या-परिमाण पृथक्त्व-संयोग-विभाग-बुद्धीच्छा-प्रयत्न
इत्यष्टौ गुणा वर्तन्ते ॥

तत्रेतीति । तयोर्द्वयोर्मध्ये—इत्यर्थः ॥ नित्येति । अत्रापि स्वा-
वच्छिन्नाऽधिकरणत्वसम्बन्धेन नित्यज्ञानत्ववत्त्वमेव लक्षणम्, तेन
लक्ष्यतावच्छेदकीभूतस्य परमत्वस्य नित्यज्ञानाधिकरणत्वस्वरूपत्वेऽपि लक्षण-
लक्ष्यतावच्छेदकयोरैक्यप्रसङ्गः । 'यः सर्वज्ञः स सर्वविदि'त्यादिश्रुतिरपी-
श्वरस्य तादृशज्ञानादिमत्त्वं प्रदर्शयतीत्यन्वेष्टव्यम् ॥ ईश्वराऽनङ्गीकर्तृम-
दूषयितुं—शंकते—नन्विति ॥ किं प्रमाणमिति । न किमपि प्रमाण-
मस्तीति भावः । कुतो न किमपि प्रमाणमित्याह—न तावदिति ।

न्यायबोधिनी

पदं समवायेन ज्ञानाश्रयत्वलाभार्थम् ॥

---

समवायेनेति । अन्यथा--कालिकेन ज्ञानाधिकरणत्वमादाय कालेऽतिव्याप्तिः
स्यादिति भावः ।

दीपिका

तावत् प्रत्यक्षम्, तद्धि-बाह्यम्, आभ्यन्तरं वा ? नाद्यः, अरूपिद्रव्यत्वात् । नान्त्यः, आत्मसुखादिव्यतिरिक्तत्वात् । नाप्यनुमानम्, लिङ्गाभावात् । नाप्यागमः, तथाविधागमाभावादिति चेन्न । 'क्षित्यङ्कुरादिकं–कर्तृजन्यं–कार्य्यत्वात्,–घटवदि'त्यनुमानस्य प्रमाणत्वात् । उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् कर्तृत्वम् ।

विवृतिः

तद्धीति । ईश्वरस्येत्यादिः, प्रत्यक्षं हीत्यर्थः । बाह्यम् = बहिरिन्द्रियजन्यम् । आभ्यन्तरम् = आन्तरेन्द्रियजन्यम्, मनोरूपेन्द्रियजन्यमिति यावत् । तदुभयमपीश्वरे नास्तीत्याह—**नाऽऽद्य इति** । न बहिरिन्द्रियजन्यप्रत्यक्षविषय इत्यर्थः । कुत इत्यत आह—**अरुपीति** । रुपवद्भिन्नत्वे सति द्रव्यत्वादित्यर्थः, द्रव्यत्वमात्रस्य हेतुत्वे घटे व्यभिचारः, अतो रूपवद्भिन्नत्वे सतीति रूपादौ व्यभिचारवारणाय—द्रव्यत्वादिति ॥ **नाऽन्त्य इति** । न मानसप्रत्यक्षविषय इत्यर्थः ॥ **आत्मेति** । आत्मभिन्नत्वे सति ज्ञानसुखादिभिन्नत्वादित्यर्थः । जीवात्मनि व्यभिचारवारणाय—आत्मभिन्नत्वे सतीति । ज्ञानसुखादौ व्यभिचारवारणाय ज्ञानसुखादिभिन्नत्वादिति । मानसत्वस्याऽऽत्मसुखादावेव सत्त्वादिति भावः ।

न चाऽलौकिकमानसत्वमीश्वरेऽप्यस्तीति वाच्यम् । पूर्वमीश्वरज्ञानविरहेण तस्याऽपि तत्राऽसंभवात् ॥ लिङ्गाऽभावात् = ईश्वरसद्भावसाधकहेतोरभावात् । आगमो = वेदः ॥ **तथाविधेति** । ईश्वरसद्भावप्रतिपादकस्य वेदस्याऽभावादित्यर्थः ॥ समाधानमाह—**नेति** ॥ **क्षित्यङ्कुरादिकमिति** । प्रागभावप्रतियोगिकार्यजातमित्यर्थः । कर्तृजन्यम् = कृतिमज्जन्यम् ॥ **कार्यत्वादिति** । सत्तावत्त्वे सति ध्वंसप्रतियोगित्वादित्यर्थः । तेन न प्रागभावे व्यभिचारः ॥ **इत्यनुमानस्येति** । कार्यत्वं यदि कर्तृजन्यत्वव्यभिचारि स्यात् कृतिजन्यतावच्छेदकं न स्यादित्याकारकतर्केण

मात्मा, चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवस्तु-प्रतिशरीरं भिन्नो विभुर्नित्यश्च ।

दीपिका

उपादानं–समवायिकारणम् । सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम् । "यः सर्वज्ञः स सर्वविदि"त्यागमोऽपि प्रमाणम् ॥

जीवस्य लक्षणमाह—जीवेति । सुखादिकं जीवलक्षणम् । ननु 'मनुष्योऽहं–ब्राह्मणोऽहमि'त्यादौ सर्वत्राऽहंप्रत्यये शरीरस्यैव विष-

विवृतिः

व्यभिचारशंकाविघटनादिति भावः ॥ साध्यघटकीभूतं कर्तृत्वं नाऽस्मदादि-साधारणं येन अंशतो बाधः स्याद्, अपि तु विलक्षणमेवेत्याशयेनाह–उपादानेति । उपादानं = समवायिकारणम् । तद्गोचरम् = तद्विषयकम्। यत् अपरोक्षज्ञानम् = प्रत्यक्षात्मकं ज्ञानम् । यच्च—उपादानगोचरीभूता चिकीर्षा = प्रयत्नसाध्यत्वप्रकारकेच्छा, या वा तादृशी कृतिः = प्रयत्नस्तद्वत्त्व-मित्यर्थः ॥ तच्च नास्मदादिनिष्ठम् किन्त्वीश्वरनिष्ठमेवेति भावः ।

तादृशकर्तृत्ववत्त्वादेवेश्वरस्य सर्वज्ञत्वमित्याह—सकलेति ॥ यत-स्तादृशकर्तृत्वमीश्वरस्यातएव तस्य सूक्ष्मदर्शित्वम्, सूक्ष्मदर्शित्वाच्च तस्य सर्वज्ञत्वम्, सर्व-विषयकज्ञानवत्त्वमित्यभिप्रायः । ईश्वरस्य सर्वज्ञत्वे श्रुतिमपि प्रमाणयति—य इति ॥ यतः सर्ववित् = सकल-परमाण्वादि-त्वेन तत्तज्ज्ञानवान् सूक्ष्माऽसूक्ष्मदर्शी अत एव सर्वज्ञः सर्वविषयक-नित्य-ज्ञानादिमानित्यर्थः । प्रमाणं = सर्वज्ञत्वादिप्रतिपादकमिति शेषः ॥ सुखा-दिकमिति ॥ सुखदुःखादिसमवायिकारणतावच्छेदकजातिमत्त्वमेव जीव-त्वमित्यर्थस्तेन न सुखादिशून्यतादशायां जीवे अव्याप्तिरिति ध्येयम् ॥ शरीराव्यतिरिक्तस्यात्मत्वं व्यवस्थापयितुं शङ्कते—नन्विति । इत्यादावि-त्यादिपदात् 'गौरोऽह'मित्यादिप्रत्ययपरिग्रहः । अहं—प्रत्यये = अस्म-

दीपिका

यत्वाच्छरीरमेवात्मेति चेन्न। शरीरस्य करपादादिनाशे [शरीरनाशादात्मनोऽपि नाशापत्तेः। नापि इन्द्रियाणामात्मत्वम्, तथात्वे 'योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामी'त्यनुसन्धानाभावप्रसङ्गात्

विवृतिः

दर्थविशेष्यकशाब्दप्रतीतौ, अलौकिकमानसे वा ॥ शरीरस्यैव विषयत्वात् = शरीरस्यैव विशेष्यत्वात्। एवकारेण-शरीरातिरिक्तस्य तादृशप्रत्ययविशेष्यत्वव्यवच्छेदः॥ शरीरमेवेति—मनुष्यत्वादेः शरीरधर्म्मत्वादिति भावः॥ समाधत्ते—नेति। करपादादिनाशे = करपादादिरूपशरीरावयवनाशे। शरीरनाशात् = शरीरात्मकावयविनाशात्॥ आत्मनोऽपि = शरीरात्मकात्मनोऽपि॥ नाशापत्तेरिति—तथा चावयवनाशस्यावयविनाशकतया आत्मनः शरीरात्मकत्वे शरीरनाशस्यैवात्मनाशस्वरूपतया आत्मनोऽपि विनाशः स्यात्। न चेष्टापत्तिः, शरीरनाशक्षणेऽपि अहं-प्रत्ययस्यानुभविकत्वात् इत्याशयः। नन्वस्तु इन्द्रियाणामात्मत्वमित्यत आह—नापीति॥ चक्षुरादीन्द्रियावयवनाशादिन्द्रियनाशे—आत्मनोऽपि नाशापत्तिरूपदोषसत्त्वेऽपि दोषान्तरमाह—तथात्वे-इति। इन्द्रियाणामात्मत्वे इत्यर्थः। योऽहं घटमद्राक्षम् = योऽहं घटविषयकचाक्षुषवानासम्, सोऽहमिदानीं स्पृशामि = सोऽहं वर्तमानकाले स्पार्शनप्रत्यक्षवानस्मि, इत्यनुसन्धानाभावप्रसङ्गात् = इत्याकारकस्य स्पार्शनाद्यनुव्यवसायादेरभावप्रसङ्गात्। अयं भावः—इन्द्रियाणामात्मत्वे एकशरीरावच्छेदेनैवात्मनो नानात्वं वक्तव्यम् इन्द्रियाणां नानात्वात्, एवञ्च भवन्मते चाक्षुषवतः स्पार्शनाश्रयस्य भिन्नतया—'योऽहं' 'सोऽहं'मित्यादिना एकस्यैवात्मनः चाक्षुषाश्रयत्वेन स्पार्शनाश्रयत्वेन च निश्चेतुमशक्यत्वान्नेन्द्रियात्मकआत्मेति।

दीपिका

अन्यानुभूतेऽन्यस्यानुसन्धानाऽयोगात्, तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः सुखादिवैचित्र्यात् प्रतिशरीरं भिन्नः । स च न परमाणुपरि-

विवृतिः

एकशरीरावच्छेदेनानुसन्धातुर्भिन्नत्वं नेष्टमेवेत्याह—अन्येति । अन्येन चक्षुरादिना, भवन्मतसिद्धेनात्मना । अनुभूते = प्रत्यक्षादिविषयीभूते वस्तुनि अन्यस्य = त्वगिन्द्रियादेर्भवन्मतसिद्धस्यात्मान्तरस्य । अनुसन्धानायोगादिति ॥ अनुसन्धानकर्तृत्वासम्भवादित्यर्थः । तथाच चैत्रानुभूतघटाद्युपरागेण मैत्रस्यापि घटं जानामीत्यनुसन्धानापत्तिभिया अवश्यं तदनुभूतोपरागेण तस्यैवानुसन्धानं भवतीति स्वीकर्तव्यम् । एवञ्चेन्द्रियाणामात्मत्वे तन्न सम्भवतीति भावः । इदमुपलक्षणम्—चक्षुरादीनां विनाशेऽपि चक्षुराद्यनुभूतस्य स्मरणदर्शनात् अन्यानुभूतस्य अन्येन्द्रियेण स्मरणासम्भवादवश्यमिन्द्रियातिरिक्त एवात्मेत्यपि द्रष्टव्यम् । न च मनसो नित्यस्यैवेन्द्रियस्यात्मत्वमुच्यताम्, तावतैव स्मरणादेर्नानुपपत्तिरिति वाच्यं तथा सति ज्ञानादेरप्रत्यक्षत्वापत्तेः । ज्ञानादिप्रत्यक्षे स्वाश्रयसमवेतत्व-सम्बन्धेन महत्त्वस्य हेतुतया मनसि तदभावात् ॥ यथाकथंचित् श्रुतार्थं सङ्गमयतां नित्यज्ञानस्यात्मत्ववादिनां मतं कर्तृत्वशून्यस्यापि पुरुषस्यात्मत्ववादिनाञ्च मतमतितुच्छमिति तन्नोपन्यस्तम्, नहि ज्ञानमात्मा—अकर्ता पुरुष आत्मेतिलोकानां स्वरसवाही प्रत्ययो येन तादृशज्ञानस्य तादृशपुरुषस्याप्यात्मत्वं सम्भवदुक्तिकं भवति । ज्ञानं नात्मा—अकर्ता नात्मेति बाधकप्रत्ययस्य सार्वजनीनस्यैवानुभविकत्वादिति ध्येयम् ॥

उपसंहरति—तस्मादिति । इन्द्रियादीनामात्मत्वे बाधकसत्त्वादित्यर्थः । देहेन्द्रियव्यतिरिक्तः—देहेन्द्रियादिभ्यो भिन्नः, जीवः—जीवात्मा । सुखादीति । आदिना दुःखादिपरिग्रहः । सुखादीनां न्यूनाधिकभावेन प्रत्यात्मभिन्नत्वादित्यर्थः ॥ प्रतिशरीरं भिन्नः—जीव इत्यनुपपद्यते । अन्यथा

सुखाद्युपलब्धिसाधनमिन्द्रियं-मनः, तच्च प्रत्यात्मनियं-

दीपिका

माणः, शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणः, तथा सति अनित्यत्वप्रसंगेन कृतहानाऽकृताभ्यागमप्रसङ्गात् । तस्मात्—नित्यो विभुर्जीवः ॥

विवृतिः

सुखादीनां वैचित्र्यं न स्यादिति भावः । आत्मनि नित्यत्वं विभुत्वञ्च साधयितुं युक्तिं प्रदर्शयति—स च नेति ॥ जीवश्च नेत्यर्थः ॥ शरीर-व्यापीति । सर्वशरीरावच्छेदेन सुखादीनामनुभवाभावापत्तेरित्यर्थः । परमाणोः सर्वशरीरेण सह सम्बन्धाभावादित्याशयः । शरीराणां यादृश-परिमाणं तादृशपरिमाणं आत्मनो न सम्भवतीत्याह—नेति ॥ तथा सति = जीवस्य मध्यमपरिमाणे सति । अनित्यत्वप्रसङ्गेनेति—पर-माणुपरिमाण-परममहत्परिमाणभिन्नपरिमाणवतां सर्वेषामेवानित्यतया जीवस्यापि तादृशपरिमाणवत्त्वेनानित्यत्वसिद्धिप्रसङ्गेनेत्यर्थः ॥ नह्यात्मनो-ऽनित्यत्वस्वीकारेऽपि निस्तार इत्याह—कृतेति ॥ कृतस्य = शुभाशुभ-कर्मजन्यादृष्टस्य, हानिः—विनाशः, अकृतस्य = तादृशकर्माऽनिष्पादित-स्यापि अदृष्टस्य, अभ्यागमः = प्राप्तिः, तत्प्रसङ्गादित्यर्थः । इदन्तु तत्त्वम् = आत्मनोऽनित्यत्वे तद्विनाशे आश्रयनाशाददृष्टस्यापि विनाशोऽङ्गी-कर्तव्यः, तथा च जन्मान्तरे यागादिजन्यधर्म्मादिमतः कर्तुरभावादिह जन्मार्जितकर्म्मणः फलभोगो न स्यात् । तादृशकर्म्माद्यकर्तुरात्मान्तरस्य भोगादिदर्शनेन अकृतकर्म्मणः फलोपभोगः स्यादिति ॥ तस्मादिति ॥ अणुपरिमाणवत्त्वे जीवस्यानित्यत्वे च पूर्वोक्तदूषणगणप्रासादित्यर्थः । नित्यः—अनादिः । विभुः—सर्वमूर्तसंयोगानुयोगी चेति दिक् ॥

न्यायबोधिनी

मनो निरूपयति—सुखादीति । उपलब्धिर्नाम-साक्षात्कारः ।

दीपिका

मनसो लक्षणमाह—सुखेति। 'स्पर्शरहितत्वे सति क्रिया-वत्त्वं' मनसो लक्षणम्॥ मनो विभजते—तच्चेति। एकैकस्यात्म-एकैकं मन आवश्यकमित्यात्मनामनेकत्वान्मनसोऽप्यनेक-

विवृतिः

मूले—सुखेति। सुखादिलौकिकसाक्षात्कारजनकत्वे सति इन्द्रिय-मनस्त्वमित्यर्थः, तेनोपनीतसुखादिचाक्षुषजनके चक्षुषि नाऽतिव्याप्तिः चक्षुरादिवारणाय सत्यन्तम्। आत्मादिवारणाय विशेष्यदलमिति ध्येयम् मनसि संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्व-वेगाख्यसंस्का-गुणा वेदितव्याः। दीपिकायां लाघवान्मनसो लक्षणमाह—स्पर्शेति स्पर्शवद्भिन्नत्वे सति—इत्यर्थः; तेन नोत्पत्तिकालीनघटेऽतिव्याप्तिः। क्रिया-वत्त्वमात्रं पृथिव्यादावतिव्याप्तमतः स्पर्शरहितत्वे सतीत्यन्तम्। स्पर्शरहि-त्वमात्रं च गगनादावतिव्याप्तमतः क्रियावत्त्वपर्यन्तानुसरणम्॥ न निष्क्रिये मनस्यतिव्याप्तिरिति वाच्यम्। स्पर्शाऽसमानाधिकरणक्रिया-समानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्।

परमाणुरूपस्य मनसो युगपद्विभिन्नेन्द्रियेण सह सम्बन्धाऽसंभवा-एकस्य प्रत्यक्षादिदशायां पुरुषान्तरस्य प्रत्यक्षादिकं न स्यात्, अ-विभिन्नमेव विभिन्नात्मनो मनो वाच्यमित्याह—एकस्येति॥ आव-श्यकमिति। पूर्वोक्तयुक्तेरिति भावः॥ सर्वेषामेव मध्यमपरिमाणव-अनित्यत्वादाह—नित्यत्वेति। मनो यदि मध्यमपरिमाणवत् स्या-अनित्यं स्यादित्याकारकाऽऽपत्तेः संभवादित्यर्थः। नचेष्टापत्तिः, अनित्यत्व-साधिकाया युक्तेरभावात्, स्पर्शशून्यद्रव्यत्वेन नित्यत्वस्यैव निश्चे-शक्यत्वाच्च॥

न्यायबोधिनी

तथाच 'सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं' मनसो लक्ष-

तत्वादनन्तं, परमाणुरूपं नित्यं च।

दीपिका

मित्यर्थः॥ परमाणुरूपमिति। मध्यमपरिमाणवत्त्वे अनित्यत्व-प्रसङ्गादित्यर्थः॥

ननु—'मनो-विभु-स्पर्शरहितद्रव्यत्वात्, आकाशादिवदि'ति चेन्न। मनसो विभुत्वे आत्ममनःसंयोगस्यासमवायिकारणस्याऽभावात् ज्ञानानुत्पत्तिप्रसंगात्। न च—विभुद्वयसंयोगोऽस्त्विति

विवृतिः

नन्विति। विभु = व्यापकम्, सर्वमूर्तसंयोगाऽनुयोगीति यावत्॥ स्पर्शेति। स्पर्शवद्भिन्नत्वविशिष्टद्रव्यत्वादित्यर्थः। घटादौ व्यभिचार-वारणाय—विशिष्टान्तम्। गुणादौ व्यभिचारवारणाय विशेष्यदलम्। आकाशादिवदिति दृष्टान्तानुसरणम्। आदिपदात् कालादिपरिग्रहः॥ आत्मेति। आत्ममनसोर्द्वयोः संयोगस्वरूपं यत्—असमवायिकारणम्, तस्याऽभावात् = तस्याऽनभ्युपगमात्, कारणाऽभावेन = ज्ञानानामनुत्पादा-पत्तेरित्यर्थः। आत्मनोऽपि विभुत्वात् तेन विभुना सह विभ्वन्तरस्य भव-न्मतसिद्धस्य मनसः संयोग एव न संभवतीत्याशयः॥ वस्तुतो मनसो विभुत्वे तेन सह युगपत् सर्वेन्द्रियसम्बन्धसंभवात् चाक्षुपादिकाले रास-नाद्यापत्तेः, अनुभवविरोधेन युगपत् ज्ञानोत्पत्तेः कल्पयितुमशक्यत्वात्-शंकते—नचेति। वाच्यमिति—परेणाऽन्वयः।

न्यायबोधिनी

णम्। इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः, अतः 'सुखादिसा-क्षात्कारकारणत्व'विशेषणम्। विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनः सुखादिकं प्रति समवायिकारणत्वात्, अत 'इन्द्रियत्व'—रूपविशेष्योपादानम्॥

चक्षुर्मात्रग्राह्यो गुणो-रूपम्। तच्च शुक्लनीलपीतरक्तह[illegible]

दीपिका

वाच्यम्, तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसंगात्, पुरीतद्[illegible] रिक्तप्रदेशात्ममनःसंयोगस्य सर्वदा विद्यमानत्वात्, अणुत्वे तु [illegible] मनः पुरीतति नाड्यां प्रविशति, तदा सुषुप्तिः, यदा निःसरति, त[illegible] ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ॥

रूपं लक्षयति—चक्षुरिति। संख्यादावतिव्याप्तिवारण[illegible]

विवृतिः

तत्संयोगस्येति, = विभुद्वयसंयोगस्य ॥ नित्यत्वेनेति। नाशा[illegible] भावादिति भावः ॥ सुषुप्त्यभावे हेतुमाह—पुरीततीति। पुरीततः नाडीविशेषः, तदतिरिक्तप्रदेशाऽवच्छेदेन सर्वदा = सर्वस्मिन् समये सं[illegible] गस्य = विभुद्वयसंयोगस्य विद्यमानत्वात् = सत्त्वादित्यर्थः। तथा च पु[illegible] तत्-मात्रमनःसंयोगस्यैव सुषुप्तिस्वरूपतया तदतिरिक्तप्रदेशे मनःसं[illegible] सत्त्वे कदाचिदपि सुषुप्तिर्न संभवतीति हृदयम् ॥ मनसोऽणुत्वे सुषु[illegible] संभवमाह—अणुत्वे त्विति। यदा = यस्मिन् काले, प्रविशति = तन्मा[illegible] संयुक्तं भवति, तदा = तस्मिन् काले, सुषुप्तिः = प्रगाढनिद्रा, निःसरति[illegible] तदतिरिक्तप्रदेशे संयुक्तं भवतीत्यर्थः ॥ इति=अस्मात् कारणात्, पूर्वोक्तदो[illegible] विभुत्वाद्यसिद्धेरिति यावत्। अणुत्वसिद्धिः=पारिशेष्यात् अणुत्व[illegible] निश्चय इत्यर्थः।

क्रमप्राप्तान् गुणान् निरूपयितुं प्रथमोद्दिष्टं रूपं लक्षयति मूले चक्षुरिति। चक्षुर्भिन्नेन्द्रियग्राह्यतानवच्छेदक—चक्षुरिन्द्रियग्राह्यतावच्छेद[illegible] जातिमत्त्वं रूपत्वमित्यर्थः। तेन न "ज्ञातं रूप" मित्याकारकचाक्षुषवि[illegible]

न्यायबोधिनी

रूपं लक्षयति—चक्षुरिति। 'चक्षुर्मात्रग्राह्यत्वविशिष्टगुण[illegible]

दीपिका

मात्रपदम्। रूपत्वेऽतिव्याप्तिवारणाय-गुणपदम्। (प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणाय—चक्षुर्मात्रग्राह्यजातिमत्त्वं वाच्यम्)। रूपं विभजते—तच्चेति। ननु अव्याप्यवृत्तिनीलादिसमुदाय एव चित्र-

विवृतिः

ज्ञानेऽतिव्याप्तिः, न वा चाक्षुषाऽविषये परमाणुरूपेऽव्याप्तिः। न चैवं गुणपदं व्यर्थम्, गुणपदोपसन्धानवशादेव तादृशार्थलाभसम्भवादिति ध्येयम्॥ दीपिकायां-संख्यादाविति। आदिपदाद् घटादिपरिग्रहः॥ अतिव्याप्तिवारणायेति—चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वरूपस्य चक्षुर्ग्राह्यत्वस्य संख्यादौ सत्त्वात् तत्रातिव्याप्तिस्तद्वारणायेत्यर्थः॥ मात्रपदमिति। तथा च संख्यादौ चक्षुरिन्द्रियग्राह्यत्ववद् त्वगिन्द्रियग्राह्यत्वस्यापि सत्त्वेन चक्षुर्मात्रग्राह्यत्वाभावान्न तत्रातिव्याप्तिरिति भावः। गुणपदप्रयोजनमाह—रूपत्वेति। रूपत्वस्य चक्षुर्मात्रग्राह्यत्वात्तत्रातिव्याप्तिस्तद्वारणायेत्यर्थः॥ गुणपदमिति। तथा च रूपत्वस्य जातित्वेन गुणत्वाभावान्न तत्राऽतिव्याप्तिरिति भावः। इदमुपलक्षणम्-गुणपदानुपादाने रूपाभावेऽप्यतिव्याप्तिस्तस्यापि चक्षुर्मात्रग्राह्यत्वादित्यपि द्रष्टव्यम्॥ चित्ररूपमनभ्युपगच्छतां मतं दूषयितुं शङ्कते—नन्विति। नीलादेर्व्याप्यवृत्तित्वे एकस्मिन् नानारूपोपलब्धिरेव न सम्भवतीत्याह—अव्याप्यवृत्तीति॥ अव्याप्य वर्त्तन्त इत्यव्याप्यवृत्तयः, पटादेः समस्तदेशेऽवर्त्तमाना इति यावत्, ये नीलपीता-

न्यायबोधिनी

रूपस्य लक्षणम्। विशेष्यमात्रोपादाने रसादावतिव्याप्तिः, अतश्चक्षुर्मात्रग्राह्यत्वविशेषणम्। तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः, 'यो

---

विशेष्यमात्रोपादाने—इति। गुणत्वमात्रस्य रूपलक्षणत्वे—इत्यर्थः॥ तावदिति। चक्षुर्मात्रग्राह्यत्वस्य रूपलक्षणत्वे—इत्यर्थः।

दीपिका

रूपमिति चेन्न, रूपस्य व्याप्यवृत्तित्वनियमात्। ननु-चित्र अवयवरूपस्य प्रतीतिरस्त्विति चेन्न, रूपरहितत्वेन पटस्याप्रत्यक्ष

विवृतिः

दयस्तेषां समुदाय एवेत्यर्थः। चित्ररूपमिति—तथा च नीलादीनां चित्ररूपमेव नास्तीति पूर्वपक्षस्याभिप्रायः॥ समाधत्ते—नेति। रूप नीलादेः। व्याप्यवृत्तित्वनियमात् = स्वाश्रयसमस्तदेशवृत्तित्वनियमा तथा च रूपत्वेन नीलादेर्व्याप्यवृत्तित्वसिद्धौ अव्याप्यवृत्तिनीलादिसमु एवासिद्ध इति भावः। प्रत्यक्षादिप्रमाणसिद्धत्वं हि वस्तुत्वसिद्धौ प्र कम्। न च तच्चित्ररूपेऽस्ति, येन तस्यातिरिक्तरूपत्वेन वस्तुत्वं सम्भ स्याशङ्कते—नन्विति। चित्रपटे = नानारूपवति पटे। अवयवरूपस्य तन्तुवृत्तिरूपस्य। पष्ठ्यर्थो विषयत्वम्, अन्वयश्चास्य प्रतीतिरित्यने तथा च चित्रपटविषयिणी या प्रतीतिः सा तन्तुवृत्तिरूपविषयिण्येव, न पटवृत्तिरूपविषयिणीति नाङ्गीकर्तव्यमेव चित्ररूपमिति भावः। न तन्तुरूपमेव चित्रमिति वाच्यं, अवयवरूपस्याऽव्याप्यवृत्तित्वे अवयवि नीरूपत्वेऽपि क्षतिविरहात्, अवयवरूपस्याव्याप्यवृत्तिनीलाद्यात्मकत्वं मानसम्भवाच्चेति विभावनीयम्। नीलरूपादेस्तन्तुमात्रवृत्तित्वे प प्रत्यक्षत्वमेव न स्यात् बहिरिन्द्रियजन्यप्रत्यक्षे रूपस्य हेतुत्वादित्या

न्यायबोधिनी

गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्ये'ति नियमात् त रणाय-विशेष्योपादानम्। चक्षुर्मात्रग्राह्यत्वं नाम = चक्षुर्भिन्नेन्द्रि ग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। मात्रपदानुपादाने संख्यादिसामान्यगु ऽतिव्याप्तिः, चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात्, अतस्तद्वारणा मात्रपदं। संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति

दीपिका

असंगात्। न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम्, गौरवात्।

विवृतिः

समाधत्ते—नेति। रूपरहितत्वेन = रूपाभाववत्त्वेन ॥ अप्रत्यक्षत्व-मिति—चाक्षुषत्वादिकं न स्यादित्यर्थः। ननु रूपवत्तन्तुसमवेतत्वस्य पटे सत्त्वात् तादृशसमवेतत्वमेव पटादेः प्रत्यक्षत्वे प्रयोजकमस्त्वित्याशङ्कते—न चेति ॥ प्रत्यक्षत्वप्रयोजकं = बहिरिन्द्रियजन्यप्रत्यक्षत्वप्रयोजकम्। न चैवमुत्पत्तिकालीनघटस्यापि प्रत्यक्षत्वापत्तिस्तत्रापि रूपवत्कपालसमवेत-त्वस्य सत्त्वादिति वाच्यम्। तत्सत्त्वेऽपि चक्षुःसंयोगरूपकारणान्तरविरहेण तदापत्त्यसम्भवात् ॥ उत्तरयति—गौरवादिति। रूपस्य तादृशप्रत्यक्षत्व प्रयोजकत्वकल्पनाया लघीयस्त्वादिति भावः। उपसंहरति—तस्मादिति। निरुक्तक्रमेण पटस्य प्रत्यक्षत्वोपपत्त्यसम्भवादित्यर्थः। पटस्य=रूपशून्यतया-

न्यायबोधिनी

अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय—चक्षुर्ग्राह्येति। अत्र लक्षणे ग्राह्यत्वं नाम = प्रत्यक्षविषयत्वम्, अग्राह्यत्वं नाम = तदविषयत्वम्, तथाच 'चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्यप्रत्यक्ष-विषयत्वमिति'—फलितोऽर्थः। ननु—प्रभाघटसंयोगे रूपलक्षणस्या-तिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति—चेन्न। गुणपदस्य विशेष-गुणपरत्वात्। न चैवं—विशेषगुणत्वघटितलक्षणे संख्यादावतिव्या-प्त्यभावान्मात्रपदवैयर्थ्यमिति—वाच्यम्। जलमात्रवृत्तिसांसिद्धिक-द्रवत्वादावतिव्याप्तिवारणाय—तदुपादानात्। अथवा—चक्षुर्मात्रग्राह्य-जातिमद्गुणत्वस्य लक्षणत्वान्न प्रभा—घटसंयोगादावतिव्याप्तिः,

---

संख्यादावतीति। संख्याया विशेषगुणत्वाभावादित्याशयः, तदुपादा-नात् = मात्रपदोपादानात् विशेषगुणत्वाघटितं लघुलक्षणमाह--अथवा चक्षुरिति,

तकपिशचित्रभेदात्सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ।

दीपिका

तस्मात् पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः । रूपस्याश्रयमाह—पृथिवीति ।। आश्रयं विभज्य दर्शयति—तत्रेति ॥

विवृतिः

स्वीकृतस्य पटस्य । आश्रयं = अधिकरणम् । एवमग्रेऽपि ॥ मूले-तत्रेति तेषु मध्ये इत्यर्थः ॥

न्यायबोधिनी

संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात्, घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात्, यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात् । अत्र जातिघटितलक्षणे 'गुणत्वा'नुपादाने-चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिस्तद्वारणाय-तदुपादानम् । एवं-रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणादावतिव्याप्तिः, विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः, अतो विशेषणविशेष्ययोरुपादानम् ॥

---

अत्र चक्षुर्मात्रग्राह्यत्वं जातिविशेषणं, तथा च संयोगत्वजातेस्त्वगिन्द्रियग्राह्यत्वेन चक्षुर्मात्रग्राह्यत्वाभावान्न तादृशजातिमादाय प्रभाघटसंयोगेऽतिव्याप्तिरिति भावः। रसादिलक्षणे-इति। विशेषणानुपादाने = रसनादिमात्रग्राह्यत्वानुपादाने॥ लक्ष्यभिन्नगुणादौ = संख्यादौ ॥ विशेष्यानुपादाने = गुणत्वस्यानुपादाने ॥ अत इति। तथाच-रसनादिमात्रग्राह्यत्वविशिष्टगुणत्वं रसादिलक्षणं पर्य्यवसितमिति भावः।

रसनग्राह्यो गुणो-रसः। स च-मधुराऽम्ल-लवण-कटु-कषाय-तिक्त-भेदात् षड्विधः, पृथिवी-जल-वृत्तिः, तत्र पृथिव्यां षड्विधः, जले मधुर एव ॥

घ्राणग्राह्यो गुणो-गन्धः। स द्विविधः-सुरभिरसुरभिश्च ।

दीपिका

रसं लक्षयति—रसनेति । रसत्वेऽतिव्याप्तिवारणाय—गुणपदम् । रसस्याश्रयमाह—पृथिवीति । आश्रयं विभज्य दर्शयति—पृथिव्यामिति ॥

गन्धं लक्षयति—घ्राणेति । गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम् ।

विवृतिः

मूले-रसनेति । रसनेन्द्रियजन्यलौकिकप्रत्यक्षविषयतावच्छेदकजातिमत्त्वं रसत्वमित्यर्थः । तेन न परमाणुरसेऽव्याप्तिः, न वा 'ज्ञातं लवणमि'त्याकारकरासनप्रत्यक्षविषये ज्ञानेऽतिव्याप्तिः । गुणपदन्तु तादृशार्थतात्पर्यग्राहकमित्यवधेयम् ॥ रसत्वेऽपि रसनाग्राह्यत्वस्य सत्त्वात्तत्रातिव्याप्तिवारकतया गुणपदं सार्थकयति—दीपिकायां—रसत्व इति । तथा च रसत्वस्य जातित्वेन गुणत्वाभावान्न तत्रातिव्याप्तिरिति भावः । द्रव्यस्य रसनेन्द्रियाग्राह्यतया अवयविनो रसशून्यत्वेऽपि न क्षतिः । अवयववृत्तिनानाजातीयरसस्यैव रसनेन्द्रियेण ग्रहणसम्भवात् चित्ररसो न स्वीकर्तव्य इति मन्तव्यम् ॥ अथ मूले मधुर एवेत्येवकारेण जले रसान्तरव्यवच्छेदः कृतः, स च न सम्भवति, जम्बीररसादावम्लत्वानुभवादिति चेन्न । तादृशाम्लत्वस्याश्रयौपाधिकत्वस्वीकारात्, हरीतक्यादिभक्षणस्य जलमाधुर्यव्यञ्जकस्य सर्वानुभवसिद्धत्वादिति संक्षेपः ॥

मूले-घ्राणेति ॥ अत्रापि घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयतावच्छे-

पृथिवीमात्रवृत्तिः ।

त्वगिन्द्रियमात्रग्राह्यो गुणः-स्पर्शः । स च त्रिविधः शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । त

दीपिका

स्पर्शं लक्षयति—त्वगिति । स्पर्शत्वेऽतिव्याप्तिवारणाय गुण

विवृतिः

दकजातिमत्त्वं गन्धत्वमित्यर्थः ॥ अधिकमभिहितं प्राक् । मूलोक्तगुण सार्थकयति दीपिकायां—गन्धत्व इति । अतिव्याप्तिवारणाय = गन्धत्वा देरपि घ्राणग्राह्यत्वादतिव्याप्तिस्तद्वारणाय = गुणपदमिति । तथा च गन्धत्वादेर्गुणत्वाभावान्नातिव्याप्तिरित्याशयः ॥

मूले-त्वगिति । त्वगिन्द्रियभिन्नेन्द्रियजन्यप्रत्यक्षविषयतानवच्छेदक त्वगिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वं स्पर्शत्वमित्यर्थः । तेन परमाणुस्पर्शेऽव्याप्तिः, न वा 'ज्ञातः स्पर्शः' इत्याकारकस्पार्शनविषये ज्ञानेऽति व्याप्तिः । अनुष्णाशीत इति । पाकजोऽनुष्णाशीतः पृथिव्याम् अपाकजस्तादृशो वायाविति तु तत्त्वम् । स्पर्शत्वादेस्त्वगिन्द्रियमात्रग्राह्यत्वेऽपि गुणत्वाभावादेव तत्र नातिव्याप्तिरित्याह—दीपिकायां-स्पर्शत्व इति संयोगादाविति । आदिपदात् संख्यादिपरिग्रहः । अतिव्याप्तिवारणाय

न्यायबोधिनी

स्पर्शं लक्षयति—त्वगिन्द्रियमात्रग्राह्य इति अत्रापि 'मात्र' पदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय । अन्यविशेषण कृत्यं पूर्ववद्बोध्यम् । ग्राह्यत्वपदार्थोऽपि पूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः ॥

---

पूर्ववत् बोध्यमिति । रूपलक्षणोक्तदिशा बोध्यमित्यर्थः ।

शीतो-जले। उष्णस्तेजसि। अनुष्णाशीतः-पृथिवीवाय्वोः।

रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च। अन्यत्रापाकजं

दीपिका

पदम्। संयोगादावतिव्याप्तिवारणाय—मात्रपदम्॥

पाकजमिति। पाकः—तेजःसंयोगः, तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यते इत्यर्थः। अत्र परमाणुष्वेव पाको न द्व्यणुकादौ, आमपाकनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः, तत्र परमाणवः समवायिकार-

विवृतिः

संयोगादेस्त्वगिन्द्रियग्राह्यत्वेन प्रसक्ताया अतिव्याप्तेर्वारणाय॥ मात्रपद-मिति—तथा च संयोगादेश्चक्षुरिन्द्रियग्राह्यत्वेन त्वगिन्द्रियमात्राग्राह्यत्वान्नातिव्याप्तिरिति भावः॥

मूले—रूपादिचतुष्टयमिति। रूपरसगन्धस्पर्शचतुष्टयमित्यर्थः॥ अन्यत्रेति। जले रूपरसस्पर्शत्रयम्, तेजसि रूपस्पर्शद्वयम्, वायौ स्पर्शमात्रम्, अपाकजम् = अग्निसंयोगाऽजन्यमित्यर्थः॥ नित्यगतम् = नित्ये जलादिपरमाणौ वर्तमानम्। अनित्यगतम् = परमाणुभिन्ने जलादौ वर्तमानमित्यर्थः॥ एतेन सर्वत्रैव पृथिव्यां रूपादेरनित्यत्वं सूचितम्॥ दीपिकायां पाकपदार्थमाह—पाक इति। तेन = तेजःसंयोगेन। पूर्व-रूपम् = अपक्वताकालीनं रूपं श्यामादिरूपमिति यावत्। रूपान्तरम् = रक्तादिरूपम्। परमाणुमात्रे पाकमभ्युपगच्छतां वैशेषिकाणाम्मतमाह—

न्यायबोधिनी

रूपादिचतुष्टयमिति। एतत्तत्त्वनिर्णयश्चेत्थम्—पाको नाम = विजातीयतेजःसंयोगः, स च नानाजातीयरूपजनको विजातीय-

नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ।

दीपिका

णम्, तेजःसंयोगोऽसमवायिकरणम्, अदृष्टादिकं निमित्तकारणम्, द्व्यणुकादिरूपे कारणरूपं असमवायिकारणमिति—पीलुपाकवादिनो वैशेषिकाः । पूर्वघटनाशं विनैव अवयविनि अवयवेषु परमाणु

विवृतिः

अत्रेति । अस्मिन् रूपान्तरोत्पत्त्यादिकार्ये इत्यर्थः ॥ जनकत्वं सप्तम्यर्थः, अन्वयश्चास्य 'पाक'—इत्यनेन ॥ एवकारव्यवच्छेद्यं दर्शयति—नन्विति ॥ आमेति । आमपाकः = अपक्वघटादीनां पाकाधिकरणस्थानविशेषः, तत्र निक्षिप्ते = संस्थापिते घटे इत्यर्थः । ततः = श्यामघटनाशे । ततः परमाणुषु रूपोत्पत्तौ द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिरिति क्रमेणान्वयो बोध्यः ॥ तत्रेति—परमाणुषु रूपान्तरोत्पत्तौ इत्यर्थः । अदृष्टादिकमिति—आदिपदात् कालादिपरिग्रहः । स्वाश्रयप्रयत्नवदात्मसंयोगवत्त्वसम्बन्धेन अदृष्टस्य, स्वानुयोगिकसंयोगवत्त्वसम्बन्धेन च कालादेः, कारणत्वं बोध्यम् ॥ द्व्यणुकादिरूप इति । आदिपदात् = त्र्यणुकादिपरिग्रहः ॥ कारणरूपमिति—द्व्यणुकरूपे परमाणुरूपम्, त्र्यणुकरूपे द्व्यणुकरूपमित्यादिरीत्या घटरूपे कपालरूपमसमवायिकारणमित्यर्थः । पीलुपाकवादिनः =

न्यायबोधिनी

स्तेजःसंयोगः, तदपेक्षया रसजनको विजातीयः, एवं गन्धजनकोऽपि ततो विजातीय एव, एवं स्पर्शजनकोऽपि तथैव, एवंप्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः, यथा—तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्मलक्षणविजातीयतेजःसंयोगा-

---

तदपेक्षयेति । रूपजनकविजातीयतेजःसंयोगापेक्षयेत्यर्थः । कार्य्यवैलक्षण्येनेति । रूपरसादिरूपकार्य्यवैलक्षण्येनेत्यर्थः ।

दीपिका

पर्य्यन्तेषु च युगपद्रूपान्तरोत्पत्तिरिति—पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः अन्यत्रेति। जलादावित्यर्थः। नित्यगतमिति। परमाणुगत-

विवृतिः

परमाणुमात्रे पाकवादिनो वैशेषिकाः, वदन्तीति शेषः॥ नैयायिकमतमाह-पूर्वघटनाशमिति = अपक्वस्य श्यामघटस्य नाशं विनेत्यर्थः। अवयविनि = घटादौ। अवयवेषु = कपालादिषु-परम्परया परमाणुपर्य्यन्तेषु। युगपत् = एकस्मिन् काले। रूपान्तरोत्पत्तिः = रक्तरूपस्योत्पादः। पीठरपाकवादिनः = द्व्यणुकादौ पाकवादिनो नैयायिकाः, प्राहुरिति शेषः। 'सोऽयं घट'इति प्रत्यभिज्ञानुरोधेन पूर्वघटनाशस्य वक्तुमशक्यत्वादिति भावः॥ अत एवेति—यतः पाकेन परमाणुषु रूपोत्पादस्तस्मादेवेत्यर्थः। अनित्यं = जन्यम्। नित्यगतमित्यादेरर्थस्तु पूर्वमेव प्रपञ्चितो वेदितव्यः।

न्यायबोधिनी

त्पूर्वहरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्तिर्न तु रसादेरुत्पत्तिः, पूर्वरसस्याम्लस्यैवानुभवात्। क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते, विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात्। तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः। एवं गन्धजनको विलक्षण एव, रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशेऽपि विजातीयपाकवशात्सुरभिगन्धोपलब्धेः, एवं स्पर्शजनकः पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्, तस्माद्रूपादिजनका विजातीया एव पाकाः, अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभव; यथा—

पाकमहिम्नेति। रूपादिजनकविजातीयतजेःसंयोगमाहिम्नेत्यर्थः।

एकत्वादिव्यवहारहेतुः-संख्या । सा नवद्रव्यवृत्तिः

दीपिका

मित्यर्थः ॥ अनित्यगतमिति । द्व्यणुकादिनिष्ठमित्यर्थः । रूपा- चतुष्टयम् उद्भूतं प्रत्यक्षम्, अनुद्भूतं अप्रत्यक्षम्, उद्भू- प्रत्यक्षत्वप्रयोजको धर्मः, तदभावोऽनुद्भूतत्वम् ॥

संख्यां लक्षयति—एकेति ॥

विवृतिः

प्रत्यक्षाप्रत्यक्षभेदेनापि रूपादेर्द्वैविध्यमाह— रूपादीति ॥ आदिना रसादिपरिग्रहः । रूपादिनिष्ठमुद्भूतत्वं स्वरूपसम्बन्धविशेषात्मकं अतः रिक्तमित्याह—उद्भूतत्वमिति । विषयतया रूपादिप्रत्यक्षे स्वरूपसम्ब- न्धोद्भूतत्वं कारणं बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे च रूपादिनिष्ठकारणताव- वच्छेदकमित्युभयमेकरूपेणानुगमय्य दर्शयति-प्रत्यक्षतेति । तदभावः उद्भूतत्वाभावः । मूले एकत्वादिति । 'एकः' 'द्वौ'—इत्यादिव्यवहा- साधारणकारणत्वं संख्यात्वमित्यर्थः । नवद्रव्यवृत्तिः = पृथिव्यादिनवद्रव्ये वर्तमाना । नित्यगतं–आकाशादौ वर्तमानम् । अनित्यगतं--अनि- पृथिव्यादौ वर्तमानम् ॥ सर्वत्रेति । पृथिव्यादौ सर्वत्रेत्यर्थः । अनित्यं

न्यायबोधिनी

गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजा- यतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रू- दिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेःसंयोगा जायन्ते तदुत्तरं तादृशरूपरसादय उत्पद्यन्ते, तादृशरूपरसादिविशिष्टपरमा- णुभिर्दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते, एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक् ॥

एकत्वादिपरार्धपर्यन्ता। एकत्वं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्रानित्यमेव।

मानव्यवहारासाधारणं कारणं परिमाणम्। नव व्यवृत्ति। तच्चतुर्विधम्। अणु, महद्दीर्घं, ह्रस्वं, चेति।

पृथग्व्यवहारासाधारणकारणं पृथक्त्वम्। सर्वद्रव्यवृत्ति।

दीपिका

परिमाणं लक्षयति—मानेति। परिमाणं विभजते—तच्चेति॥ भावप्रधानो निर्देशः,—अणुत्वं, महत्त्वं, दीर्घत्वं, ह्रस्वत्वं, चेत्यर्थः॥

पृथक्त्वं लक्षयति—पृथगिति। 'इदमस्मात् पृथक्' इतिव्यवहारकारणमित्यर्थः॥

विवृतिः

अपेक्षाबुद्धिजन्यम्, उत्पत्तिविनाशशालीति यावत्। द्वित्वादिकन्तु पर्य्याप्तिसम्बन्धेन अनेकवर्तमानमपि बोध्यम्। दीपिकायां संख्यां लक्षयति,—संख्याया लक्षणं वक्तीत्यर्थः॥

मूले—मानेति। मानम् = एकरत्यादिकम्, तद्व्यवहारासाधारणकारणत्वं परिमाणत्वम्। कालादिसाधारणकारणवारणायाऽसाधारणेति। परिमाणमपि आकाशादिगतं नित्यं, जन्यगतं जन्यम् बोध्यम्। नवद्रव्यवृत्ति = प्रथिव्यादिनवद्रव्ये वर्तमानम्। अणुप्रभृतीनां द्रव्यवाचित्वात् परिमाणविभागासम्भवादाह-दीपिकायां—भावेति। तथा च अणुप्रभृतेरणुत्वादिपरतया न काप्यनुपपत्तिरिति प्रदर्शयति—अणुत्वमिति॥ लक्षयतीत्यस्य पूर्ववदर्थो बोध्यः। इदं = वस्तु। अस्मात् = वस्तुतः। इति व्यवहारहेतुः = इत्याकारकव्यवहारासाधारणकारणम्। तथा च

संयुक्तव्यवहारहेतुः-संयोगः । सर्वद्रव्यवृत्तिः ॥

दीपिका

संयोगं लक्षयति—संयुक्तेति । 'इमौ संयुक्ता'विति व्य-
हारहेतुरित्यर्थः । संख्यादिलक्षणेषु सर्वत्र दिक्कालादावतिव्या-
वारणाय-असाधारणेति देयम् । संयोगो द्विविधः—कर्म-
संयोगजश्च, आद्यो हस्तक्रियया पुस्तकसंयोगः, द्वितीयो हस्तपुस्त-
संयोगात् कायपुस्तकसंयोगः, अव्याप्यवृत्तिः-संयोगः, स्वात्यन्
भावसमानाधिकरणत्वम् अव्याप्यवृत्तित्वम् ॥

विवृतिः

'इदमस्मात् पृथगि'त्याकारकव्यवहारासाधारणकारणत्वं--पृथक्त्वा-
लक्षणं पर्य्यवसितमिति भावः । 'कपालं न घटः-घटो न रूपमि'त्या-
कारकप्रत्ययवत् 'कपालात्पृथग्घटः'-'घटात्पृथग्रूपमि'त्यादिप्रत्ययस्यापि
तया पृथक्त्वमन्योन्याभावतो भिन्नमेवेति मन्तव्यम् ॥

संयोगलक्षणं परिष्कर्तुमाह—इमाविति । द्रव्यात्मकावित्यर्थः
इति = इत्याकारको यो व्यवहारः तदसाधारणकारणत्वं संयोगत्वम् । पूर्व-
सर्वत्र व्यवहारघटितलक्षणे असाधारणत्वप्रवेशप्रयोजनमाह—सर्वत्रेति
दिक्कालादाविति । साधारणकारणेत्यादिः । आदिपदाददृष्टादिपरिग्रहः
विभजते--संयोग इति । कर्मजः = क्रियाजन्यः । संयोगजः = संयो-
जन्यः ॥ आद्य इति । कर्मज इत्यर्थः । द्वितीय इति । संयोग
इत्यर्थः । कायपुस्तकसंयोगः = शरीरपुस्तकसंयोगः । क्रियाजन्यसंयो-
द्विविधः--अभिघाताख्यो नोदनाख्यश्च । शब्दकारणसंयोगोऽभिघाताख्
शब्दाकारणसंयोगो नोदनाख्यः ॥ स्वात्यन्तेति । स्वस्य योऽत्यन्ताभाव-
दधिकरणे वर्तमानत्वं स्वनिष्ठमव्याप्यवृत्तित्वम् । स्वं = अव्याप्यवृत्तित्वेनाभि-
मतं संयोगादि । वस्तुतः स्वाधिकरणवृत्त्यभावप्रतियोगित्वमेव स्वस्मि-

संयोगनाशको गुणो-विभागः। सर्वद्रव्यवृत्तिः।

दीपिका

विभागं लक्षयति—संयोगेति। कालादावतिव्याप्तिवारणाय-गुण इति। रूपादावतिव्याप्तिवारणाय—संयोगनाशक इति।

विवृतिः

व्याप्यवृत्तित्वम्, स्वम् = अव्याप्यवृत्तित्वेनाभिमतम्। मूले-संयोगेति। संयोगनाशजनकत्वे सति गुणत्वं विभागत्वमित्यर्थः। अत एव संयोगनाशात् अतिरिक्तो विभागः, विभागोत्पत्तिक्षणे संयोगनाशस्योत्पत्त्यसम्भवात्॥ सर्वेति। पृथिव्यादिनवद्रव्यवृत्तिरित्यर्थः॥ दीपिकायां—कालादाविति। आदिपदादात्मादिपरिग्रहः। कालादीनामपि संयोगनाशप्रयोजकत्वात् तत्रातिव्याप्तिरित्याशयः॥ गुण इति। तथा च कालादेर्गुणत्वाभावान्नातिव्याप्तिरिति भावः॥ रूपादाविति। आदिपदाद्रसादिपरिग्रहः, रूपादेर्गुणत्वेन भवत्यतिर्व्याप्तिरित्याशयः॥ संयोगनाशक इति। तथा च रूपादेः संयोगनाशकत्वाभावान्नातिव्याप्तिरित्याशयः। यद्यपि संयोगनाशकगुणत्वमदृष्टादावतिव्याप्तम्, न च संयोगनाशस्य साक्षाज्जनकत्वमेव निवेशनीयमिति वाच्यम्, तथा सति गुणपदवैयर्थ्यापत्तेः, कालादेः साक्षात्तद्धे-

न्यायबोधिनी

विभागं लक्षयति—संयोगेति। 'संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम्। विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिस्तद्वारणाय—गुणत्वमिति— विशेष्योपादानम्॥

---

विशेषणमात्रेति। संयोगनाशकत्वमात्रोपादाने—इत्यर्थः। रूपादावातिव्याप्तिवारणाय—विशेषणदलमित्यपि बोध्यम्। अत्र नाशकत्वं—प्रतियोगित्वानवच्छिन्नं ग्राह्यं, तेन न संयोगेऽतिव्याप्तिः।

परापरव्यवहारासाधारणकारणे-परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते च द्विविधे-दिक्कृते, कालकृते चेति । दूरस्थे दिक्कृतं परत्वम्, समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वं, कनिष्ठे कालकृतमपरत्वम् ।

दीपिका

विभागोऽपि द्विविधः—कर्मजः,विभागजश्च, आद्यो हस्तक्रियया हस्तपुस्तकविभागः, द्वितीयो हस्तपुस्तकविभागात् कायपुस्तकविभागः ॥

परत्वापरत्वयोर्लक्षणमाह—परापरेति । परव्यवहारकारणं—परत्वम्, अपरव्यवहारकारणं अपरत्वमित्यर्थः । ते विभजते—द्विविधे इति । दिक्कृतयोरुदाहरणमाह—दूरस्थ इति । कालकृते उदाहरति—ज्येष्ठ इति ।

विवृतिः

तुत्वाऽसम्भवात् । तथाऽपि संयोगनाशकसामान्यगुणो विभाग इत्यस्यैव विवक्षणीयतया न कोऽपि दोषः । न च तथाऽपि संयोगेऽतिव्याप्तिस्तस्याऽपि प्रतियोगिविधया संयोगनाशं प्रति हेतुत्वादिति वाच्यम् । प्रतियोगित्वानवच्छिन्नसंयोगनाशकताया विवक्षितत्वादिति-ध्येयम् । विभजते–विभागाऽपीति । आद्यः-कर्मजः । द्वतीयः—विभागजः । विभागजन्यविभागो द्विविधः—कारणमात्रविभागजन्यः, कारणाकारणविभागजन्यश्च । एवं पूर्वोक्तरीत्या विभागस्याव्याप्यवृत्तित्वम् बोध्यम् ॥

परेति । परव्यवहारासाधारणकारणमित्यर्थः; एवमग्रेऽपि, तेन कालादौ साधारणकारणे नातिव्याप्तिः । द्विविधमेव परत्वापरत्वमपेक्षाबुद्धिजन्यम्; अपेक्षाबुद्धिनाशाच्च तयोर्नाश इत्यपि बोध्यम् ॥

आद्यपतनासमवायिकारणं-गुरुत्वं पृथिवीजलवृत्ति। आद्य-स्यन्दनासमवायिकारणं-द्रवत्वम्। पृथिव्यप्तेजो-

दीपिका

गुरुत्वं लक्षयति—आद्येति। द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽतिव्याप्तिवारणाय—आद्येति॥

द्रवत्वं लक्षयति—स्यन्दनेति। स्यन्दनं-प्रस्रवणम्। तेजः-

विवृतिः

मूले-आद्येति। आद्यत्वं = प्रथमक्षणसम्बन्धः, तथा च तद्विशिष्ट-पतनाऽसमवायिकारणं गुरुत्वमित्यर्थः। असमवायिकारणत्वविवक्षणात् कालादौ, पतनसमवायिकारणे द्रव्ये वा नातिव्याप्तिः॥ दीपिकायां आद्य-पदप्रयोजनमाह—द्वितीयादीति। आदिपदात् तृतीयादिपरिग्रहः॥ वेगेति। वेग एवासमवायिकारणं यस्य तादृशत्वादित्यर्थः। तथा च पतनाऽसमवायिकारणत्वमात्रोक्तौ वेगेऽतिव्याप्तिरतः—आद्यत्वं पतनविशेषणम्, तथा सति वेगस्य प्राथमिकपतनासमवायिकारणत्वाभावान्न तत्राति-व्याप्तिरिति भावः॥

मूले-स्यन्दनेति। स्यन्दनं-तरलीभूय गमनं, तस्यासमवायिकारणं द्रवत्वमित्यर्थः। असमवायिकारणत्वविशेषणात् निमित्तकारणे अदृष्टादौ,

न्यायबोधिनी

गुरुत्वं लक्षयति—आद्येति। द्वितीयपतनक्रियायां वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय—आद्येति। उत्तरत्र स्यन्दने 'आद्ये'ति विशेषणमपि पूर्ववदेव योजनीयम्॥

---

पूर्ववदेवेति। वेगेऽतिव्याप्तिवारणार्थमेवेत्यर्थः। द्वितीये-स्यन्दने वेगस्याऽसमवायिकारणत्वादिति हृदयम्।

वृत्ति । तद्द्विविधम्—सांसिद्धिकं, नैमित्तिकं, च । सांसि-
द्धिकं-जले । नैमित्तिकं-पृथिवीतेजसोः । पृथिव्यां-घृतादा-
वग्निसंयोगजं द्रवत्वम् । तेजसि = सुवर्णादौ ।

चूर्णादिपिण्डीभावहेतुर्गुणः-स्नेहः । जलमात्रवृत्तिः ।

दीपिका

संयोगजं नैमित्तिकम्, तद्भिन्नं सांसिद्धिकम् ॥ पृथिव्यां नैमित्ति-
मुदाहरति—घृतादाविति । तेजसि तदाह—सुवर्णादाविति।

स्नेहं लक्षयति—चूर्णेति । कालादावतिव्याप्तिवारणाय-

विवृतिः

समवायिकारणे च पृथिव्यादौ नातिव्याप्तिः । सांसिद्धिकं = स्वाभाविकम्
दीपिकायां-तेजःसंयोगजमिति । तेजो-वह्न्यादिकं; तस्य यः संयो-
स्तज्जन्यमित्यर्थः ॥ घृतादावित्यादिपदेन जतुप्रभृतिपरिग्रहः
सुवर्णादाविति—आदिना रजतादिपरिग्रहः ॥

मूले-चूर्णेति । चूर्णीकृतानां पदार्थानां यः पिण्डीभावः = संवे-

न्यायबोधिनी

स्नेहं लक्षयति—चूर्णादीति । 'चूर्णादिपिण्डीभावहेतुत्वे सति
गुणत्वं' स्नेहस्य लक्षणम् । पिण्डीभावो नाम = चूर्णादेर्धारणाकर्षण-
हेतुभूतो विलक्षणः संयोगः, तादृशसंयोगे स्नेहस्यैवासाधारण-
कारणत्वं न तु जलादिगतद्रवत्वस्य, तथा सति द्रुतसुवर्णादिसंयो-
गेन चूर्णादेः पिण्डीभावापत्तेः, अतः स्नेह एवासाधारणं कारणम्
विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय—विशेष्यो-

---

विशेषणमात्रोपादाने इति । चूर्णादिपिण्डीभावहेतुत्वस्य स्नेहलक्षणत्वे-

श्रोत्रग्राह्यो गुणः-शब्दः। आकाशमात्रवृत्तिः। स

दीपिका

गुण इति। रूपादावतिव्याप्तिवारणाय—पिण्डीभावेति॥

शब्दं लक्षयति—श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय—गुण इति, रूपादावतिव्याप्तिवारणाय—श्रोत्रेति, शब्दस्त्रिविधः-

विवृतिः

परस्पराविच्छिन्नसंयोगस्तस्य हेतुरसाधारणकारणीभूतो गुणः स्नेह इत्यर्थः, तेन नादृष्टादावतिव्याप्तिः॥ जलमात्रेति। मात्रपदात् स्नेहस्य द्रव्यान्तरवृत्तित्वव्यवच्छेदः। दीपिकायां-कालादाविति। आदिपदात् दिगादिपरिग्रहः। कालादेः कार्यमात्रं प्रति हेतुत्वादित्याशयः। गुण इति। तथा च कालादेर्गुणत्वाभावान्नातिव्याप्तिरिति भावः, गुणत्वमात्रस्य स्नेहलक्षणत्वे रूपादेरपि गुणत्वात् तत्रातिव्याप्तिरतश्चूर्णीभावहेतुत्वं गुणविशेषणम्, तथा सति रूपादेश्चूर्णीभावहेतुत्वाभावान्न तत्रातिव्याप्तिरित्याह—रूपादाविति।

मूले-श्रोत्रेति। श्रवणेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमान् शब्द इत्यर्थः। तेन न श्रोत्राग्राह्ये शब्दविशेषेऽव्याप्तिः। तादृशजातिलाभा-

न्यायबोधिनी

पादानम्। वस्तुतस्तु—द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वं, स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात्। जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः॥

शब्दं लक्षयति—श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय—

---

इत्यर्थः, मूलोक्त-स्नेहलक्षणस्याऽसमीचीनत्वमाह-वस्तुतस्त्विति, तथा च स्नेहत्वजातिमत्त्वमेव स्नेहलक्षणमिति भावः।

द्विविधः—ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः—संस्कृतभाषादिरूपः ।

दीपिका

संयोगजो, विभागजः, शब्दजश्चेति । तत्र आद्यो—भेरीदण्डसंयोगजन्यः, द्वितीयो—वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः, भेर्यादिदेशमारभ्य श्रोत्रपर्य्यन्तद्वितीयादिशब्दाः शब्दजाः ॥

विवृतिः

यैव गुणपदोपादानमिति ध्येयम् ॥ यथाश्रुतलक्षणे गुणपदं सार्थकं दीपिकायां—शब्दत्व इति । अतिव्याप्तिवारणाय = शब्दत्वस्य श्रोत्रग्राह्यतया प्रसक्ताया अतिव्याप्तेर्वारणाय ॥ गुण इति । तथा च शब्दत्वस्य जातित्वेन गुणत्वाभावान्नातिव्याप्तिरिति भावः ॥ गुणत्वमात्रस्य शब्दलक्षणे दोषमाह—रूपादाविति । अतिव्याप्तिवारणाय = रूपस्य गुणत्वेन प्रसक्ताया अतिव्याप्तेर्वारणाय ॥ श्रोत्रेति । तथा च रूपस्य श्रोत्रग्राह्यत्वाभावान्न तत्रातिव्याप्तिरिति भावः ॥ संयोगज इति । संयोगजन्य इत्यर्थः एवमग्रेऽपि । आद्यः = संयोगजः । द्वितीयः = विभागजः । तृतीयं शब्दजन्यशब्दमुदाहरति—भेर्यादीति । द्वितीयादीत्यादिना तृतीयादिपरिग्रहः शब्दजाः = शब्दजन्याः । प्रथमादिशब्देन द्वितीयादिशब्दस्योत्पन्नत्वादित्याशयः ॥

न्यायबोधिनी

गुण इति । रूपादावतिव्याप्तिवारणाय—श्रोत्रेति । स त्रिविधः संयोगजो, विभागजः, शब्दजश्चेति । यथा भेरीदण्डसंयोगजो झांकारादिशब्दः, हस्ताभिघातसंयोगजन्यो—मृदङ्गादिशब्दः, वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः । शब्दोत्पत्तिदेशमारभ्य

स त्रिविध इति । शब्दः—त्रिविध इत्यर्थः ।

सर्वव्यवहारहेतुर्गुणो-बुद्धिर्ज्ञानम्। सा द्विविधा—स्मृतिरनुभवश्च।

दीपिका

बुद्धेर्लक्षणमाह—सर्वेति। कालादावतिव्याप्तिवारणाय—गुण-इति। रूपादावतिव्याप्तिवारणाय—सर्वव्यवहार इति। 'जानामी'-त्यनुव्यवसायगम्यज्ञानत्वं—लक्षणमित्यर्थः॥ बुद्धिं विभजते—सेति॥

विवृतिः

मूले—सर्वव्यवहारेति। सर्वेषां—'घटपट' इत्याद्यभिलापात्मकानां व्यवहाराणां कारणीभूतो गुणो बुद्धिरित्यर्थः॥ बुद्धिरेव ज्ञानं न तु सा ज्ञानादतिरिच्यते—इत्याह—ज्ञानमिति। सा = बुद्धिः। कार्यमात्रं प्रति हेतुभूतस्य कालादेः सर्वव्यवहारं प्रत्यपि कारणतया सर्वव्यवहारहेतुत्वमात्रस्य लक्षणत्वे तत्राऽतिव्याप्तिरित्याह–दीपिकायां—कालादाविति॥ गुण इति। तथा च कालादेर्द्रव्यात्मकतया गुणत्वाऽभावान्न तत्राऽतिव्याप्तिरित्याशयः। गुणत्वमात्रस्य लक्षणत्वे दोषमाह—रूपादाविति॥ सर्वव्यवहार इति। तथा च रूपादौ सर्वव्यवहारहेतुत्वाऽभावान्नाऽतिव्याप्तिरिति भावः। वस्तुतः—सर्वव्यवहाराऽसाधारणकारणतावच्छेदकजातिमत्त्वमेव ज्ञानसामान्यलक्षणं वक्तव्यम्, अन्यथा अदृष्टादेरपि सर्वव्यवहारहेतुभूतगुणात्मकतया तत्राऽतिव्याप्तेर्दुर्वारता स्यात्, गुणपदं तु तादृशार्थतात्पर्यग्राहकमित्यवधेयम्॥ यथाश्रुतमूलार्थपरित्यागेन स्वयं ज्ञानलक्षणमाह—

न्यायबोधिनी

श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते, तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम्॥

बुद्धेर्लक्षणमाह—सर्वव्यवहारेति। व्यवहारः शब्दप्रयोगः,

संस्कारमात्रजन्यं ज्ञानं-स्मृतिः ।

दीपिका

स्मृतेर्लक्षणमाह–संस्कारेति । भावनाख्यः–संस्कारः संस्कारध्वंसेऽतिव्याप्तिवारणाय–ज्ञानमिति । घटादिप्रत्यक्षेऽ

विवृतिः

ज्ञानामीति । घटमित्यादिः, तथा च तादृशानुव्यवसायात्मक–मानस प्रत्यक्षविषयज्ञानत्वं ज्ञानसामान्यलक्षणमिति भावः ॥ वेगाख्यसंस्कारा स्मृत्यहेतुत्वादाह—भावनाख्य इति ॥ ज्ञानपदप्रयोजनमाह—संस्कार ध्वंस इति । अतिव्याप्तिवारणाय = प्रतियोगिविधया संस्कारध्वंसं प्र संस्कारस्य हेतुत्वेन तत्र प्रसक्तायाः अतिव्याप्तेर्वारणाय ॥ ज्ञानमिति तथा च ध्वंसस्याभावत्वेन ज्ञानत्वाभावान्न तत्रातिव्याप्तिरित्याशयः यद्यपि संस्कारध्वंसं प्रति स्वजन्यस्मरणस्य रोगादेर्वा कारणतया न संस्कारमात्रजन्यत्वाभावादेवातिव्याप्तिवारणसंभवे ज्ञानपदं निरर्थकम् तथापि संस्कारमात्रजन्यत्वपदेन संस्कारजन्यत्वे सति संस्कारेतरेन्द्रिय जन्यत्वस्य विवक्षणीयतया ज्ञानपदानुपादाने संस्कारध्वंसेऽतिव्याप्तिः कथं मात्रेण वारयितुमशक्यत्वात् ज्ञानपदं सप्रयोजनमेवेति मन्तव्यम् । ज्ञान मात्रस्य स्मृतिलक्षणत्वे दोपमाह—घटादीति । तथाच तादृशप्रत्यक्ष

न्यायबोधिनी

ज्ञानं विना शब्दप्रयोगासंभवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते—सा द्विविधेति ॥

स्मृतिं लक्षयति"संस्कारेति । 'संस्कारजन्यत्वविशिष्टज्ञानत्वं' स्मृतेर्लक्षणम् । विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिस्तद्वार

---

शब्दप्रयोगासम्भवादिति । 'अयं घटः–अयं पट'इत्याकारकशब्दप्रयोगा ऽसम्भवादित्यर्थः ।

तद्भिन्नं ज्ञानम्-अनुभवः। स द्विविधः-यथार्थोऽयथार्थ-

दीपिका

व्याप्तिवारणाय-संस्कारजन्यमिति । प्रत्यभिज्ञायामतिव्याप्ति-वारणाय-मात्रेति ॥

अनुभवं लक्षयति-तद्भिन्नमिति । 'स्मृतिभिन्नं ज्ञानमनुभव'-इत्यर्थः ॥ अनुभवं विभजते—स द्विविध इति । यथार्थानुभवं

विवृतिः

स्यानुभवत्वेन संस्काराजन्यत्वात् संस्कारजन्यत्वस्य ज्ञानविशेषणत्वोपादानान्न तत्रातिव्याप्तिरिति भावः। नन्वस्तु संस्कारजन्यज्ञानमेव स्मरणं कृतं मात्रपदेन इत्यत आह—प्रत्यभिज्ञायामिति। 'सोऽयं घट'इत्याद्याकारक-प्रत्यक्षविशेषे-इत्यर्थः। अतिव्याप्तिवारणाय = प्रत्यभिज्ञाया अपि संस्कार-जन्यत्वेन स्मृतित्वापत्तिवारणाय ॥ मात्रेतीति । तथा च प्रत्य-भिज्ञायाः संस्कारेतरचक्षुरिन्द्रियजन्यतया संस्कारमात्रजन्यत्वाभावान्न तत्रातिव्याप्तिरिति भावः। स्मृतिभिन्नमिति । घटादावतिव्याप्तिवारणाय ज्ञानमिति । स्मृतावतिव्याप्तिवारणाय स्मृतिभिन्नमिति। तथा च स्मृतिभिन्न-

न्यायबोधिनी

णाय-विशेषणोपादानम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय-विशे-ष्योपादानम्। ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसे-ऽपि संस्कारजन्यत्वस्य सत्त्वात् । प्रत्यभिज्ञायामतिव्याप्तिवारणाय-'मात्र'पदम् ॥

अनुभवं लक्षयति—तद्भिन्नमिति । तद्भिन्नत्वं नाम = स्मृति-भिन्नत्वम्। स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम्। तत्र

---

मात्रपदमिति । तथाच प्रत्यभिज्ञायां इन्द्रियजन्यत्वस्यापि सत्त्वात् संस्कार-मात्रजन्यत्वं तत्राऽप्रसिद्धमिति भावः।

श्चेति। तद्वति तत्प्रकारकोऽनुभवो-यथार्थः। यथा 'अयं घ

दीपिका

लक्षयति—तद्वतीति। ननु 'घटे घटत्वमि'ति प्रमायामव्याप्तिः घटत्वे घटाभावादिति चेन्न। 'यत्र यत्सम्बन्धोऽस्ति तत्र तत्सम्बन्ध

विवृतिः

त्वविशिष्टज्ञानत्वमनुभवसामान्यलक्षणमिति पर्यवसितम्। स द्विविधः अनुभवो द्विविधः। मूले तद्वतीति। घटत्वादिमन्निष्ठविशेष्यतानिरूपित-घटत्वादिनिष्ठप्रकारताशाल्यनुभवत्वं यथार्थानुभवत्वमित्यर्थः। प्रकारा भेदेन यथार्थानुभवलक्षणस्याऽपि भिन्नत्वाभ्युपगमादित्याशयः। यथार्थानु वलक्षणघटकतद्वत्त्वं यदि तदधिकरणत्वं तदा 'घटे घटत्व'मित्याकारकप्रमा मव्याप्तिः, वृत्त्यनियामकाधेयतासम्बन्धेन घटाधिकरणत्वाऽप्रसिद्धया तेन स न्धेन तद्वत्त्वघटितप्रमात्वस्य तत्रासत्त्वादित्याशङ्कते दीपिकायां—नन्विति घटे इति। समवायावच्छिन्नाधेयतासम्बन्धेन घटप्रकारकघटत्ववि विशेष्यताशालिन्यां प्रमायामित्यर्थः। घटाभावादिति। आधेयतासम्ब स्य वृत्त्यनियामकतया तेन सम्बन्धेन घटाभावस्याऽप्रसिद्धया तदतिरि सम्बन्धेन घटत्वे घटसत्ताया वक्तुमशक्यत्वादिति भावः॥ प्रमालक्षणघ

न्यायबोधिनी

विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावति व्याप्तिरतस्तद्वारणाय—विशेषण-विशेष्ययोरुभयोरुपादानम्। अनु भवं विभजते—स द्विविध इति॥

यथार्थानुभवं लक्षयति—तद्वतीति। तद्वतीत्यत्र सप्तम्यर्था

---

तत्र विशेषणानुपादाने इति। स्मृतिभिन्नत्वानुपादाने-इत्यर्थः। विशेष्यानु पादाने = ज्ञानपदानुपादाने; तद्वारणाय = स्मृतिघटयोरतिव्याप्तिवारणाय।

इति ज्ञानम्। सैव प्रमेत्युच्यते।

दीपिका

नुभव' इत्यर्थात् घटत्वेऽपि घटसम्बन्धोऽस्ति—इति नाऽव्याप्तिः॥ सैवेति। यथार्थानुभव एव शास्त्रे 'प्रमा' इत्युच्यते इत्यर्थः॥

विवृतिः

तद्वत्त्वं न तदधिकरणत्वम्, अपि तु तत्सम्बन्धित्वमात्रमित्याशयेन समाधत्ते-नेति। यत्र = घटत्वादौ, यत्सम्बन्धोऽस्ति = यस्य घटादेराधेयतात्मक-सम्बन्धोऽस्ति, तत्र = घटत्वादौ, तत्सम्बन्धानुभवः = तस्य घटादेराधेयतात्मकसम्बन्धानुभवः, यथार्थ इति शेषः। तथा च तत्सम्बन्धिनिष्ठविशेष्यता-निरूपित-तन्निष्ठप्रकारताशाल्यनुभवो-यथार्थाऽनुभव इति भावः॥ घट-सम्बन्धोऽस्ति = घटस्य समवायावच्छिन्नाऽऽधेयतात्मकसम्बन्धोऽस्ति॥ नाऽव्याप्तिरिति। तथा च घटे घटत्वमिति ज्ञानस्य—आधेयतात्मकघट-सम्बन्धि-घटत्वनिष्ठविशेष्यतानिरूपितघटनिष्ठप्रकारताकतया न तत्राऽव्या-प्तिरित्याशयः॥ वस्तुतस्तदधिकरणनिष्ठविषयतानिरूपित-तन्निष्ठविषयता-शाल्यनुभवत्वस्यैव यथार्थाऽनुभवस्वरूपतया न 'घटे घटत्व' मित्याकारक-प्रमायामव्याप्तिः, तत्र घटविषयतानिरूपितघटत्वविषयतायाः सत्त्वात्। न चैवं निर्विकल्पकेऽतिव्याप्तिः, तत्र घटघटत्वादिविषयतयोः सत्त्वेऽपि तयोर्नि-रूप्यनिरूपकभावाऽनभ्युपगमेनाऽतिव्याप्तिविरहादिति ध्येयम्। शास्त्रे = न्यायादिशास्त्रे॥ उच्यत इति। स्मृतेस्तत्करणाऽनुभवनिष्ठ-प्रमात्वसापेक्ष-प्रमात्ववत्त्वेन तान्त्रिकाणामनुभवे एव प्रमात्वव्यवहारः, न तु स्मृतौ, अत

न्यायबोधिनी

विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः, तथाच—तद्वद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वं' यथार्थानुभवस्य लक्षणम्, उदाहरणम्-रजते 'इदं रजतम्' इति ज्ञानम्, अत्र रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः। 'तद्व-

तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः।

दीपिका

अयथार्थानुभवं निरूपयति—तदभाववतीति।

विवृतिः

एव नैयायिकानां प्रमाणादिविभागो नाऽनुपपन्नः, यथार्थाऽनुभवकरणस्यैव प्रमाणत्वादिति तु तत्त्वम्॥

मूले-तदभाववतीति। तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठ-

न्यायबोधिनी

न्निष्ठविशेष्यतानिरूपित-तन्निष्ठप्रकारताशालित्वमि'ति तु निष्कर्षः, 'अन्यथा-यथाश्रुते रङ्गरजतयो'रिमे रजतरङ्गे' इत्याकारक-समूहालम्बनभ्रमेऽतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्वरजतत्व-प्रकारकत्वयोः, रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोः सत्त्वात्। उक्तनिष्कर्षे तु नातिव्याप्तिः, रजतत्वप्रकारताया रज-तत्ववद्विशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्व-वद्विशेष्यतानिरूपितत्वाभावात्। किंतु समूहालम्बनभ्रमस्य रङ्गांशे-रजतत्वावगाहित्वेन रजतत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपि-तत्वात्। एवं रजतांशे रङ्गत्वावगाहित्वेन रङ्गत्वप्रकारताया रज-तत्ववद्विशेष्यतानिरूपितत्वाच्चेति। नानामुख्यविशेष्यताशालिज्ञानं समूहालम्बनम्॥

अयथार्थानुभवं लक्षयति—तदभाववतीति। अत्रापि पूर्व-

---

तद्वतीति। तद्विशेष्यकत्वावशिष्ट-तत्प्रकारकानुभवत्वमित्यर्थः।

अन्यथा = तद्वन्निष्ठविशेष्यतानिरूपितत्वस्य तन्निष्ठप्रकारतायामविवक्षणे। इत्याकारकसमूहालम्बनभ्रमे = रंगे रजतत्वप्रकारके—रजते च रंगत्वप्रकारके-समूहालम्बनभ्रमे।

रजतत्वावगाहित्वेनेति। रजतत्वविषयितावत्त्वेनेत्यर्थः, एवमुत्तरत्रापि। नानेति। अनेका या प्रकारत्वानवच्छिन्ना विशेष्यता तच्छालि-ज्ञानं = समूहा-लम्बनमित्यर्थः।

दीपिका

ननु—'इदं संयोगी'ति प्रमायाम् अतिव्याप्तिरिति चेन्न। यदवच्छे-

विवृतिः

प्रकारताशालि ज्ञानं—अयथार्थं इत्यर्थः, भवति हि 'ह्रदो वह्निमानि' त्यनुभवोऽयथार्थः, तस्य वह्न्यभाववद्-ह्रदनिष्ठविशेष्यतानिरूपितवह्निनिष्ठ-प्रकारताकत्वात्। 'पर्वतो वह्निमानि'त्यनुभवस्तु न तथा, पर्वते वह्न्यभावस्याऽसत्त्वात्।

अथ—'पर्वतो वह्निमान्-गुणः सत्तावानि'त्याकारकयथार्थज्ञानेऽतिव्याप्तिः, वह्निप्रतियोगिकस्य वह्निघटोभयाभावस्य सत्ताप्रतियोगिकस्य विशिष्टसत्ताऽभावस्य पर्वते गुणे च सत्त्वात्। यदि च तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारकज्ञानस्याऽयथार्थत्वमित्युच्यते, तदा 'द्रव्यं गुणः-द्रव्यत्ववान् वा गुण' इत्याकारकभ्रमेऽव्याप्तिः, द्रव्यत्वत्वस्याऽनुपस्थिततया गुरुतया च तदवच्छिन्नाऽभावाऽप्रसिद्धेरिति-चेन्न। भ्रमत्वस्य प्रकारविशेष्यभेदेन भिन्नतया द्रव्यत्वादिभ्रमत्वं तु तदभाववति तत्प्रकारकज्ञानत्वमात्रम्, वह्न्यादिभ्रमत्वं च तदवच्छिन्नाऽभाववति तदवच्छिन्नप्रकारकज्ञानत्वरूपमित्यस्यैवाऽभ्युपगन्तव्यत्वात्, लक्ष्यभेदेन लक्षणस्य नानात्वात्। न चैवं 'गगने घट' इति प्रमायामतिव्याप्तिः, आधेयतासम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेन गगनाऽभावस्याऽप्रसिद्ध्या तदतिरिक्तसम्बन्धेन गगनाभावस्य घटे सत्त्वादिति वाच्यम्। तत्सम्बन्धित्वाऽभाववति तत्प्रकारकज्ञानत्वस्यैवाऽयथार्थलक्षणत्वेन विवक्षिततया तत्राऽतिव्याप्त्यसंभवात्। गगननिरूपिताऽऽधेयतात्मकसम्बन्धित्वस्य घटेऽनपायादिति ध्येयम्। वस्तुतो—'नित्यज्ञानाऽवृत्तिविषयितावत्त्वमेव' भ्रमसामान्यलक्षणमिति न कोऽपि दोष इति तु युक्तमुत्पश्यामः॥

यथाश्रुतमूलोक्तलक्षणेऽतिव्याप्तिमाशंकते दीपिकायां—नन्विति। 'इदम् = परिदृश्यमानं जलादिकम्; प्रमायाम्=संयोगवति जलादौ संयोग-

दीपिका

देन यत्सम्बन्धाभावस्तदवच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात्,

विवृतिः

प्रकारिकायां प्रमायाम् ॥ अतिव्याप्तिरिति । 'इदं संयोगी'ति ज्ञानस्य किञ्चिदवच्छेदेन संयोगाऽभाववति जले संयोगप्रकारकत्वेन अयथार्थलक्षणस्य सत्त्वादतिव्याप्तिरित्यर्थः । न च तद्वन्निष्ठविशेष्यतानिरूपित—तन्निष्ठप्रकारता-शून्यत्वमपि—अयथार्थलक्षणे विवक्ष्यतामिति नेयमतिव्याप्तिरिति वाच्यम् । तथा सति रङ्ग-रजतविशेष्यकस्य रजतत्वप्रकारकज्ञानस्य 'इमे रजते'—इत्याकारकस्य रङ्गांशेऽपि भ्रमत्वाऽनुपपत्तेः; निरुक्तज्ञाने रजतत्ववन्निष्ठविशेष्यतानिरूपित-रजतत्वनिष्ठप्रकारतायाः सत्त्वात् ॥ उत्तरयति—नेति । यदवच्छेदेन = यद्देशावच्छेदेन; यत्सम्बन्धाऽभावः = यस्य यत्सम्बन्धाऽभावः, तदवच्छेदेन = तद्देशावच्छेदेन; तत्सम्बन्धज्ञानस्य = तेन सम्बन्धेन तत्प्रकारकज्ञानस्याऽपि ॥ विवक्षितत्वादिति । अयथार्थपदेनेत्यादिः । 'इदं संयोगी'ति ज्ञानं यदि-यद्देशावच्छेदेन संयोगाभावस्तद्देशावच्छेदेन संयोग-प्रकारकं तदा तस्य भ्रमत्वमिष्टमेव, यदि च यद्देशावच्छेदेन संयोगस्तद्देशा-वच्छेदेन संयोगप्रकारकं तदा तत्राऽतिव्याप्तिसंभावनैव नास्तीत्याह—संयोगेति । भ्रमत्वात् = भ्रमत्वस्येष्टत्वात् । संयोगसम्बन्धस्य = संयो-

न्यायबोधिनी

वत्-तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं' वि-वक्षणीयम् । अन्यथा—रङ्गरजतयो'रिमे रङ्गरजते'इत्याकारकसमूहा-लम्बनप्रमायामतिव्याप्तिः । एतत्समूहालम्बनस्य रङ्गरजतोभय-

---

अन्यथेति । तदभाववन्निष्ठविशेष्यतानिरूपितत्वस्य तन्निष्ठप्रकारताया-मविवक्षणे—इत्यर्थः । इत्याकारकसमूहालम्बनप्रमायां = रंगे रंगत्वप्रकारके रजते च रजतत्वप्रकारके समूहालम्बनयथार्थज्ञाने ।

यथार्थानुभवश्चतुर्विधः—प्रत्यक्षाऽनुमित्युपमितिशाब्दभेदात् ।

दीपिका

संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् संयोगावच्छेदेन संयोगसम्बन्धस्य सत्त्वात् नातिव्याप्तिः ॥

यथार्थानुभवं विभजते—यथार्थेति ॥ प्रसंगात् प्रमाकरणं

विवृतिः

गस्य यः सम्बन्धस्तस्य ॥ नातिव्याप्तिरिति। संयोगावच्छेदकदेशाऽवच्छेदेन संयोगसम्बन्धाऽभाववत्त्वाऽभावान्न तत्र विवक्षितलक्षणस्याऽतिव्याप्ति-रित्यर्थ इति दिक् ।

मूले प्रत्यक्षेति। प्रत्यक्षानुभवाऽनुमित्यनुभवोपमित्यनुभवशाब्दानु-

न्यायबोधिनी

विशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्ग-विशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्ग-त्वप्रकारकत्वयोश्च सत्त्वात्। उक्तनिष्कर्षे तु-तादृशप्रमाया रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारतायाः रजतत्वाभाववद्रङ्गविशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकार-ताया रङ्गत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावान्नातिव्याप्तिः। उदाहरणम्—यथा शुक्तौ-'इदं रजतम्' इति ॥

यथार्थानुभवं विभजते—चतुर्विध इति ॥

---

इदं रजतमिति। तथाचोक्तज्ञानस्य रजतत्वाभाववत्—शुक्तिनिष्ठविशेष्यता-निरूपित—रजतत्वप्रकारताकत्वेनाऽयथार्थानुभवत्वमिति भावः।

प्रमाकरणत्वमिति। यथार्थज्ञानकरणत्वं प्रमासामान्यलक्षणमित्याशयः।

व्यापारवदिति। तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारत्वं, तत्पदं—करणत्वेनाभिमतव्यक्तिपरम्।

तत्करणमपि चतुर्विधं–प्रत्यक्षानुमानोपमान-शब्द-भेदात्।

असाधारणं कारणं-करणम् ।

दीपिका

विभजते—तत्करणमिति । प्रमाकरणमित्यर्थः । 'प्रमायाः करणं प्रमाण'मिति प्रमाणसामान्यलक्षणम् ।

करणलक्षणमाह—असाधारणेति । साधारणकारणे दिक्कालादावतिव्याप्तिवारणाय—असाधारणेति ॥

विवृतिः

भवभेदादित्यर्थः ॥ दीपिकायां विभजते-इत्यस्य पूर्ववदर्थो बोध्यः। प्रसंगात् = प्रसंगसंगतेः । प्रमालक्षणमाह—प्रमाया इति । यथार्थानुभवस्येत्यर्थः ।

मूलेऽसाधारणमिति । असाधारणत्वं = व्यापारवत्त्वम्, तथा च तज्जन्यत्वे सति तज्जन्यजनको व्यापारस्तद्विशिष्टं कारणं करणम्, तत्तत् करणत्वेनाभिमतं वस्त्विति भावः । अस्ति च कुठारादिकं छिदाकरणं, कुठारवृक्षादिसंयोगस्य कुठारजन्यतया कुठारजन्यछिदाजनकतया च व्यापारत्वात्, तादृशव्यापारस्य कुठारे सत्वात्। असाधारणपदव्यावृत्तिमाह दीपिकायां—साधारणेति। कार्यमात्रं प्रति हेतुभूते इत्यर्थः ॥ दिक

न्यायबोधिनी

तत्करणमिति । फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः। प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम्। एकैकप्रमाणलक्षणं तु वक्ष्यते–'प्रत्यक्षज्ञाने'त्यादिना ॥

करणलक्षणमाह—असाधारणमिति । 'व्यापारवदसाधारणं कारणं'–करणमित्यर्थः। असाधारणत्वं च = 'कार्यत्वावच्छि

कार्यनियतपूर्ववृत्ति-कारणम् ॥

दीपिका

कारणलक्षणमाह—कार्येति। 'पूर्ववृत्ति कारणमि'त्युक्ते

विवृतिः

त्वादावितिः। आदिपदादात्मादिपरिग्रहः। तथा च कारणमात्रस्य करणत्वे सर्वत्रैव कार्ये कालादेः करणत्वापत्तिस्तेषामपि कार्यमात्रं प्रति कारणत्वात्, अतः असाधारणत्वं कारणविशेषणं देयमेव, तदुपाने कार्यमात्रकारणीभूतस्य दिगादेः तत्तत्प्रमोपधायकव्यापारवत्त्वाभावेन असाधारणकारणत्वाभावान्न तत्रातिव्याप्तिरिति भावः॥

प्रमाणलक्षणघटककारणलक्षणं प्रदर्शयति—मूले कार्येति। यत्कार्यस्याधिकरणे कार्याव्यवहितप्राक्क्षणे, यस्यावश्यं वर्तमानत्वं, यस्याभावाधिकरणदेशावच्छेदेन तदग्रिमक्षणे अवश्यं कार्याभावः तदेव कार्यनियतपूर्ववृत्ति कारणमित्यर्थः, यथा दण्डादिकं घटादिकार्यनियतपूर्ववर्त्ति सत्

न्यायबोधिनी

क्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्' यथा दण्डादेर्घटादिकं प्रत्यसाधारणकारणत्वम्, कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः, तदवच्छिन्नकार्यता घटे, तन्निरूपितकारणता दण्डे, अतो घटं प्रति दण्डः असाधारणं कारणम्, भ्रम्यादिरूपव्यापारवत्त्वाच्च-करणम्। साधारणत्वं च = कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। ईश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम्॥

कारणं लक्षयति—कार्यनियतेति। 'कार्यं प्रति नियतत्वे सति

---

नियतत्वे सति पूर्ववृत्तित्वमिति। कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्यसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वमित्यर्थः।

दीपिका

रासभादौ अतिव्याप्तिरतस्तद्वारणाय—नियतेति ॥ तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः—पूर्ववृत्तीति ॥

विवृतिः

घटकारणम्, एवमन्यत्राप्युह्यम् ॥ अत एवाभिहितमभियुक्तैः कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवत्त्वं कार्यनियतपूर्ववर्त्तित्वमिति ॥ नियतपदव्यावृत्तिमाह दीपिकायां=पूर्ववृत्तीति । कार्यपूर्वक्षणे वर्त्तमानमेव कारणमित्युक्तावित्यर्थः ॥ रासभादाविति । आदिपदात् घटादिकर्तुः कुलालादेः पित्रादिपरिग्रहः ॥ रासभस्य कदाचित् घटपूर्ववर्त्तित्वेऽपि नियमेन तत्र घटाव्यवहितपूर्ववर्त्तित्वाऽसत्त्वात् नियतपूर्ववर्त्तित्वस्य कारणत्वरूपत्वे न तत्रातिव्याप्तिरत आह—अत इति ॥ तावदिति । कार्यनियतत्वमेव कारणत्वमित्येतावन्मात्रस्य कारणलक्षणत्वे इत्यर्थः ॥ अतिव्याप्तिरिति । कार्यस्यापि कार्यनियतत्वात् कार्यमात्रेऽतिव्याप्तिरित्यर्थः ॥ कार्यस्य कार्याव्यवहितप्राक्क्षणेऽसत्त्वात् पूर्ववर्त्तित्वदले न तत्रातिव्याप्तिरित्याह—अत इति । शङ्कते नन्विति । तन्तुरूपमपि तन्तुरूपादिकमपि ॥ कारणमिति । तन्तुरूपस्य पटात्मककार्यस्याधिकरणे

न्यायबोधिनी

पूर्ववृत्तित्वम्' । नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यादतो—नियतत्वे सतीति विशेषणम् । नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽ'नन्यथासिद्ध'पदमपि कारणलक्षणे निवेशनीयम् । दण्डरूपादीनां त्वन्यथासिद्धत्वात् ॥

---

अनन्यथासिद्धेति । अनन्यथासिद्धत्वम्—अन्यथासिद्धभिन्नत्वं, अन्यथासिद्धत्वञ्च = अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वम् ।

दीपिका

ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेन्न। 'अनन्यथासिद्धत्वे सती'ति विशेषणात्। अनन्यथासिद्धत्वम्—अन्यथासिद्धिविरहः। अन्यथासिद्धिस्त्रिविधा-'येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत् तेन अन्यथासिद्धम्'—यथा—तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति। 'अन्यं प्रति पूर्ववृत्तित्वे ज्ञाते एव यस्य

विवृतिः

तन्तौ पटाव्यवहितप्राक्क्षणे सत्त्वादित्याशयः। समाधत्ते—नेति। अनन्यथासिद्धत्वे सति = अन्यथासिद्धत्वाभावत्वे सति॥ विशेषणादिति। तथा च अन्यथासिद्धत्वाभाववत्त्वे सति नियतपूर्ववर्तित्वं कारणत्वं, तच्च न तन्तुरूपादौ, तत्र अन्यथासिद्धत्वस्यैव विद्यमानत्वात्, अतो न पटं प्रति तन्तुरूपं कारणमिति भावः। अन्यथासिद्धिविरहः = अन्यथासिद्धत्वाऽभावः। अन्यथासिद्धिपदार्थं निर्वक्ति—अन्यथासिद्धिरिति। अन्यथासिद्धत्वमित्यर्थः॥ येनेत्यादिः। येन=कारणेन सह यस्य = कारणवृत्तिगुणकर्मादेः, तद्वृत्तिधर्मस्य च। यं प्रति = यादृशकार्यं प्रति पूर्ववर्त्तित्वं = नियतपूर्ववर्त्तित्वं अवगम्यते=ज्ञायते तत्=गुणकर्मादिकम्, कारणवृत्तिधर्मादिकञ्च तेन=कारणेन, अन्यथासिद्धम् = अन्यथासिद्धत्वयुक्तमित्यर्थः। दृष्टान्तमाह—यथेत्यादिः। तन्तुना=पटकारणीभूतेन तन्तुना। तन्तुरूपं = तन्तुवृत्तिगुणात्मकं रूपं तन्तुत्वञ्च, पटकारणवृत्तिधर्मस्वरूपञ्च। पटं प्रति = पटात्मककार्यं प्रति, अन्यथासिद्धमिति शेषः। एवं कपालेन कपालरूपादिकमपि घटं प्रत्यन्यथासिद्धमूहनीयम्। द्वितीयमन्यथासिद्धमाह—अन्यं प्रतीति। शब्दं प्रतीत्यर्थः। ज्ञाते एव = तादृशपूर्ववर्त्तित्वज्ञानानन्तरमेव। यस्य = शब्दकारणाकाशादेः। यं प्रति = पटादि कार्यं प्रति। तं प्रति=तादृशपटादिकं प्रति। तत्=तादृशाकाशं॥ दृष्टान्तमाह-यथेति। शब्दं प्रति कारणं तावदाकाशं, एवञ्च—शब्दपूर्ववर्त्तित्वज्ञानं विना पटादिपूर्ववर्त्तित्वं ज्ञातुं न शक्यते।

दीपिका

यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्'—यथा
शब्दं प्रति पूर्ववृत्तित्वे ज्ञाते एव पटं प्रति आकाशस्य । 'अन
क्लृप्तनियतपूर्ववर्तिन एव कार्य्यसम्भवे तत्सहभूतमन्यथासि
यथा-पाकजस्थले गन्धं प्रति रूपप्रागभावस्य । एवं च-'अनन्य
सिद्धनियतपूर्ववृत्तित्वं—कारणत्वम् ॥

विवृतिः

इति पटादिकार्ये शब्दकारणाकाशस्यान्यथासिद्धत्वमेवेत्याह-शब्दं प्रती
आकाशस्येति । शब्दकारणस्येत्यादिः । अन्यथासिद्धत्वमिति शे
नन्वेवं पटं प्रति तन्तुना तन्तुसंयोगस्य प्रथमोक्तान्यथासिद्धत्वं स्यात्,
विनिगमनाविरहात् तन्तुत्वमेव कारणं स्यात्, तन्तोश्चान्यथासिद्धत्वमि
शंक्य चरमान्यथासिद्धमाह—अन्यत्रेति । रासभादिशून्यतादशो
घटादौ कार्ये इत्यर्थः । क्लृप्तनियतपूर्ववर्त्तिनो दण्डादेरेव कारणात् कार्यसम
रासभकालीनघटादिकार्योत्पत्तिसम्भवे । तत्=दण्डादिसहभूतं, द
समानाधिकरणमिति यावत्, रासभादिकं सर्वमेवान्यथासिद्धम् । तथा च
यन्व्यतिरेकसिद्धनियतपूर्ववर्त्तितावतो यदतिरिक्तं तत्सर्वमेवान्यथा
मिति भावः । तन्तुत्वादेः पटादिकार्येण अन्वयव्यतिरेकसिद्धत्वाभाव
पटं प्रति अन्यथासिद्धत्वमेव, तन्तुसंयोगस्य चान्वयव्यतिरेकसिद्धतया
प्रत्यन्यथासिद्धत्वमपि तु कारणत्वमेवेति ध्येयम् । न च विनिगमनावि
तन्तुत्वमेवावश्यक्लृप्तमिति वाच्यम् । तन्तुत्वस्य पटकारणत्वे तन्तुत्व
प्रवेशे गौरवात्, लाघवस्यैव तन्तोरवश्यक्लृप्तत्वे विनिगमकत्वसम्भवा
हृदयम् । दृष्टान्तमाह—यथेति । अवश्यक्लृप्तनियतपूर्ववर्तिना अप
गन्धकारणीभूतेन गन्धप्रागभावेनैव पाकजगन्धोत्पत्तिसम्भवे रूपप्राग
पाकजगन्धोत्पत्तावन्यथासिद्ध एवेत्याह—पाकजस्थले इति ।
संयोगजन्यगन्धाद्युत्पत्तिस्थले रूपं प्रति रूपप्रागभावस्यानन्यथासि

कार्यं—प्रागभावप्रतियोगि।

कारणं त्रिविधं—समवाय्यसमवायिनिमित्तभेदात्।

यत्समवेतं कार्यमुत्पद्यते तत्-समवायिकारणम्, यथा—तन्तवः पटस्य, पटश्च-स्वगतरूपादेः।

दीपिका

कार्य्यलक्षणमाह। कार्यमिति।

कारणं विभजते—कारणमिति। समवायिकारणलक्षणमाह—यत्समवेतमिति।

विवृतिः

दाह—गन्धं प्रतीति। गन्धोत्पत्तिं प्रतीत्यर्थः। रूपप्रागभाव इति। अन्यथासिद्ध इति शेषः। उपसंहरति एवञ्चेति। निरुक्तक्रमेणान्यथासिद्धत्वस्य निर्वचने चेत्यर्थः॥ अनन्यथेति। अन्यथासिद्धत्वाभाववत्वे सति नियतपूर्ववर्तित्वं कारणत्वमित्यर्थः। इत्यभिहितं प्राक्। मूले कार्यमित्यादि। प्रागभावप्रतियोगित्वं कार्यसामान्यलक्षणमित्यर्थः। 'घटो भविष्यति पटो भविष्यति' इत्याद्याकारकप्रागभावप्रतियोगिनो ये घटादयः त एव जन्याः, नित्यानां गगनादीनां प्रागभावस्यासम्भवादित्याशयः—मूले यत्समवेत-

न्यायबोधिनी

कार्यं लक्षयति—कार्यमिति। 'प्रागभावप्रतियोगित्वं'—कार्यस्य लक्षणम्। कार्योत्पत्तेः पूर्वम् 'इह घटो भविष्यति' इति प्रतीतिर्जायते, एतत्प्रतीतिविषयीभूतो योऽभावः स प्रागभावः, तत्प्रतियोगि घटादिरूपं कार्यम्॥

कारणं विभजते—कारणमिति। समवायिकारणम्—असमवायिकारणं, निमित्तकारणं, चेति॥

समवायिकारणं लक्षयति—यत्समवेतमिति। यस्मिन्समवेतं

कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं

दीपिका

यस्मिन् समवेतमित्यर्थः ॥

असमवायिकारणलक्षणमाह—कार्य्येणेति । कार्य्येणे-
दुदाहरति—तन्तुसंयोग इति । कार्य्येण पटेन सह एक-

विवृतिः

स्मिति । यस्मिन् द्रव्ये समवायसम्बन्धेन वर्तमानं सत् कार्यमु-
इत्यर्थः ॥ उदाहरति—यथेति । स्वगतरूपादेः = घटगतरूपादेः । आ-
दाव् स्पर्शपरिग्रहः, तथा च समवायावच्छिन्नकार्यतानिरूपिततादात्म्य-
न्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति भावः ॥ कार्येणेति । का-
घटादिकार्येण सह । एकस्मिन्नर्थे = तन्तौ, समवायेन वर्तमानत्वे
कारणेन = रूपादिकारणेन पटादिना सह एकस्मिन्नर्थे समवायेन
वर्तमानत्वे च सति यत्कारणं तदित्यर्थः । तथा च समवाय-स्वा-
समवेतत्वान्यतरसम्बन्धेन समवायिकारणे वर्तमानं सत् ज्ञानादि-
यत्कारणं तदसमवायिकारणमिति पर्यवसितम् ॥ आद्यमुदाहरति-यथे-
पटस्य = पटस्वरूपकार्यस्य असमवायिकारणमिति शेषः । तथा च ए-
स्मिन्नेव तन्तौ पटस्य तन्तुसंयोगस्य च समवेतत्वात् भवति तन्तुसं-
पटासमवायिकारणमिति भावः । द्वितीयमुदाहरति—तन्तुरूपमि-
पटरूपस्य = पटगतनीलादिरूपस्य, असमवायिकारणमिति शेषः । तथा
एकस्मिन्नेव तन्तौ पटगतरूपकारणीभूतस्य पटस्य तन्तुरूपस्य च समवे-
वर्तमानत्वात् पटरूपं प्रति तन्तुरूपमप्यसमवायिकारणमेवेत्याशयः । प्र-
पटसमवायिकारणे तन्तौ समवायेन वर्तमानस्य तन्तुसंयोगस्य पटास-
वायिकारणत्वम्, द्वितीये रूपसमवायिकारणे पटे स्वाश्रयसमवेतत्वसम्ब-
न वर्तमानस्य तन्तुरूपस्य पटरूपासमवायिकारणत्वं बोध्यम् । दीपिकायां
यस्मिन्निति । द्रव्ये इत्यर्थः । कार्येणेत्यादेर्व्याख्यानमाह—कार्येण इ-

कारणम्—असमवायिकारणम्, यथा—तन्तुसंयोगः पटस्य।

दीपिका

तन्तौ समवेतत्वात् तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः॥

विवृतिः

कारणेन = रूपादिसमवायिकारणेन निमित्तकारणलक्षणमाह—समवा-

न्यायबोधिनी

सत् = समवायेन संबद्धं सत्—कार्यमुत्पद्यते तत् समवायिकारणमित्यर्थः, उदाहरणम्—यथा तन्तव इति। तन्तुषु समवायेन संबद्धं सत्पटात्मकं कार्यमुत्पद्यते तत् = तन्तवः समवायिकारणमित्यर्थः। सामान्यलक्षणं तु—'समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं'—समवायिकारणत्वमिति। समवायसंबन्धेन घटाधिकरणे कपालादौ कपालादेः तादात्म्यसंबन्धेनवसत्त्वात्, समवायसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-कार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः। जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्, द्रव्ये तु द्रव्यावयवाः समवायिकारणम्, अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह—पटश्च स्वगतरूपादेरिति। समवायिकारणमित्यनुषज्यते॥

असमवायिकारणं लक्षयति—कार्येणेति। 'कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तत्'—असमवायिकारणमित्यन्वयः।

---

सामान्यलक्षणमिति। ध्वंसादिनिमित्तकारणवारणाय—समवायसम्बन्धावच्छिन्नत्वं कार्य्यताविशेषणम्। असमवायिकारणेऽतिव्याप्तिवारणाय—तादात्म्यसम्बन्धावच्छिन्नत्वं कारणताविशेषणम्।

तन्तुरूपं पटरूपस्य ॥

दीपिका

कारणेन सहेत्येतदुदाहरति—तन्तुरूपमिति । कारणेन पटे- सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायि-

न्यायबोधिनी

'कारणेन सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तद'समवायि- कारणमित्यन्वयः। अत्र कारणेनेत्यस्य-स्वकार्यसमवायिकारणेने- त्यर्थः। जन्यद्रव्यमात्रे अवयवसंयोगस्यैवासमवायिकारणत्वात्- त्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वमिति दर्शय- यथा तन्तुसंयोगः पटस्येति। पटात्मककार्येण सहैकस्मिन्नर्थे=तन्- समवेतं सन्=समवायसंबन्धेन वर्तमानं सन् पटात्मककार्यं प्रति तन्तुसंयोगात्मकं कारणम्—असमवायिकारणमित्यर्थः। द्वितीयमस- वायिकारणं 'कारणेन सह'त्यादिना पूर्वोक्तं तदुदाहरति-तन्तुरूपमिति कारणेन सह=पटरूपसमवायिकारणीभूतपटेन सह, एकस्मि- न्नर्थ=तन्तुरूपेऽर्थे, समवेतं सन्=समवायसम्बन्धेन वर्तमानं तन्तु- रूपं-पटगतरूपं प्रति कारणं भवति, अतोऽसमवायिकारणं तन्तु- रूपं पटगतरूपस्य। सामान्यलक्षणं तु—समवायसंबन्धावच्छि-

स्वकार्य्येति। स्वं=असमवायिकारणत्वेनाभिमतं गुणादिकं, तथा तन्तुसंयोगस्य यत् कार्यं=पटात्मकं तत्समवायिकारणेन तन्तुनेत्यर्थः इदं सामान्यलक्षणान्वेति। समवायेन कार्यं प्रति समवाय—स्वसमवायिसमवेतत- त्सम्बन्धेन यत् कारणं ज्ञानादिभिन्नं तदसमवायिकारणमित्यर्थः। 'स्व'पदम- समवायिकारणपरम्। तथा च कपालसंयोगः समवायसम्बन्धेन घटं प्रत्यसमवायि- कपालरूपञ्च स्वसमवायिसमवेतत्वसम्बन्धेन घटरूपं प्रत्यसमवायिकारणं, घटरूप- कार्यस्याधिकरणे कपाले कपालसंयोगस्य समवायेन घटरूपस्वरूपकार्यस्य- करणे घटे कपालरूपस्य—स्वपदोपात्तं यत् कपालरूपं तत्समवायिकपालसमवेत- सम्बन्धेन वर्तमानत्वादित्याशयः।

तदुभयभिन्नं कारणं—निमित्तकारणम्, यथा—तुरीवे-

दीपिका

कारणमित्यर्थः॥ निमित्तकारणं लक्षयति—तदुभयेति। समवाय्यसमवायिभिन्नकारणं निमित्तकारणम् इत्यर्थः॥

विवृतिः

उभयेति। समवायिकारणभिन्नमसमवायिकारणभिन्नं यत्कारणं तन्निमित्तकारणमित्यर्थः। अथैवं दण्डादेर्घटादिकं प्रति निमित्तकारणत्वं न स्यात्

न्यायबोधिनी

कार्यतानिरूपिता या समवाय–स्वसमवायिसमवेतत्वाऽन्यतर–संबन्धावच्छिन्ना कारणता तदाश्रयत्वम्—असमवायिकारणत्वमिति। द्रव्यासमवायिकारणीभूतावयवसंयोगादौ तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवायसंबन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते। एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः, आद्यपतनक्रियां प्रति आद्यस्यन्दनक्रियां प्रति च समवायसंबन्धेनैव तयोः कारणत्वात्। अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्वसंबन्धेनैव कारणत्वात्, तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते, अवयवगुणस्य कपालतन्तुरूपादेः स्वशब्दग्राह्यकपालरूपतन्तुरूपसमवायिकपालतन्तुसमवेतत्वसंबन्धेन घटपटादौ सत्त्वात्॥

निमित्तकारणं लक्षयति—तदुभयभिन्नमिति। 'समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं'—निमित्तकारणत्वमित्यर्थः॥

मादिकं पटस्य ॥

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव-करणम् ।

दीपिका

कारणलक्षणमुपसंहरति—तदेतदिति । प्रत्यक्षलक्षणमाह-

विवृतिः

दण्डस्य दण्डरूपं प्रति समवायिकारणत्वेन तत्र समवायिकारणभिन्नत्वा-
सत्त्वात् । न च तत्तत्कार्यसमवायिकारणभिन्नत्वमेव निवेशनीयम्, दण्डा-
देर्घटसमवायिकारणभिन्नतयैव निमित्तकारणत्वसम्भव इति वाच्यम् । तथा
सति ध्वंसनिमित्तकारणेऽव्याप्त्याऽऽपत्तेः, ध्वंसनिरूपितसमवायिकारण-
प्रसिद्ध्या तद्भिन्नत्वस्य वक्तुमशक्यत्वात्; इति चेन्न । समवायिकारण-
भिन्ना सती असमवायिकारणताभिन्ना च सती या कारणता तस्याः
निमित्तकारणतारूपत्वात् दण्डादिनिष्ठायाः रूपादिसमवायिकारणता-
भेदस्य तन्निष्ठायां घटादिनिमित्तकारणतायां सत्त्वेन न कोऽपि दोषः इति
वदन्तीत्यास्तां विस्तरः । मूले तदेतदिति । निरुक्तसमवाय्यसमवायिनि-
मित्तकारणेषु मध्ये यदसाधारणं व्यापारवत्कारणं तदेव करणं प्रमाण-
मित्यर्थः । एककारणे इतरकारणस्य करणत्वव्यवच्छेदः । दीपिकायां-प्रत्यक्ष-
लक्षणान्याहेति । प्रत्यक्षप्रमाणलक्षणमाहेत्यर्थः । प्रत्यक्षज्ञानकरणत्वरूप-
प्रमाणलक्षणस्य तद्घटकीभूतप्रत्यक्षप्रमाज्ञानं विना ज्ञातुमशक्यत्वात् प्र-

न्यायबोधिनी

तदेतदिति । यदसाधारणमिति । व्यापारवत्त्वे सतीति
पूरणीयम्, अन्यथा—तन्तुकपालसंयोगयोरतिव्याप्तिः, तन्तुकपाल-
संयोगयोरपि कार्यत्वातिरिक्तपटत्वघटत्वावच्छिन्नं प्रति कारणत्वे
दसाधारणत्वमस्त्येवेत्यतस्तत्र करणत्ववारणाय—'व्यापारवत्त्वे सति'
'करण'लक्षणे विशेषणं देयम् । व्यापारत्वं च = 'तज्जन्यत्वे स-

तत्र प्रत्यक्षज्ञानकरणं-प्रत्यक्षम् ॥

दीपिका

तत्रेति । प्रमाणचतुष्टयमध्ये इत्यर्थः ॥ प्रत्यक्षज्ञानस्य लक्षणमाह—

न्यायबोधिनी

तज्जन्यजनकत्वम्' । भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद्भ्रम्यादेर्दण्डव्यापारत्वम् । एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वं, कपालतन्तुजन्यत्वे सति कपालतन्तुजन्यघटपटजनकत्वात् । करणलक्षण असाधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्कारणत्वस्य सत्त्वात्, तत्रातिव्याप्तिवारणाय—असाधारणेति विशेषणम् ॥

षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति । प्रमाभूतेषु प्रत्यक्षात्मकं यज्ज्ञानं= चाक्षुषादिप्रत्यक्षं, तत्प्रति व्यापारवदसाधारणंकारणमिन्द्रियं भवति, अतः 'प्रत्यक्षज्ञानकरणत्वं' प्रत्यक्षस्य—लक्षणम् । आद्यसंनिकर्षातिरिक्तचतुर्विधसंनिकर्षाणां समवायरूपत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं न संभवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या । मानसप्रत्यक्षे स्वात्ममनःसंयोगस्यैव सा बोध्या ॥

---

तत्पदेन कारणत्वेनाभिमतव्याक्तिरेव धर्त्तव्येत्याह—भवति हीति ।

आद्येति । समवायस्य नित्यत्वेनेन्द्रियजन्यत्वाभावात् इति भावः । वस्तुतः समवायादेर्नित्यसम्बन्धस्य व्यापारत्वं नेन्द्रियादिजन्यत्वघटितमपि तु जनकजनकव्यावृत्तं साक्षात्कार्य्यजनकत्वमेवेति ध्येयम् ।

[ ज्ञानाकरणकं ज्ञानं-प्रत्यक्षम् ] 'इन्द्रियार्थसंनिकर्ष-जन्यं ज्ञानं'—प्रत्यक्षम् । तद्द्विविधम्—निर्विकल्पकं, सविकल्पकं, चेति ॥

दीपिका

इन्द्रियेति । इन्द्रियं-चक्षुरादिकम्, अर्थो-घटादिः, तयोः संनिकर्षः—संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः । तद् विभजते-

विवृतिः

लक्षणमाह मूले—इन्द्रियेति । दीपिकायामुक्तलक्षणं व्याचष्टे—इन्द्रि-मिति । चक्षुरादीति । आदिना घ्राणादिपरिग्रहः । घटादिरित्यत्रादि-रूपादिपरिग्रहः । तयोः = इन्द्रियार्थयोः चक्षुरादिघटाद्योरिति यावत् सन्निकर्षः=सम्बन्धः ॥ संयोगादिरिति । आदिना संयुक्तसमवाय-परिग्रहः ॥ तज्जन्यमिति । तेन = संयोगादिना जन्यमुत्पन्नमित्यर्थः

न्यायबोधिनी

प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—ज्ञानाकरण-कमिति। क्षेपकं लक्षणमिदम्। ज्ञानं = व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानं, च करणं येषां ते ज्ञानकरणकाः = अनुमित्युपमितिशाब्द-ज्ञानकरणकं न भवतीति—ज्ञानाकरणकम्, तत्त्वं—प्रत्यक्षलक्षणम्, लक्षणमीश्वरप्रत्यक्षसाधारणम्, ईश्वरप्रत्यक्षस्याजन्यत्वात्, प्रत्यक्षे च इन्द्रियाणामेव करणत्वं न तु ज्ञानस्येति तयोरुभ-

---

क्षेपकमिति । ग्रन्थाघटकमित्यर्थः ।

इदं लक्षणमिति । ज्ञानाकरणकत्वघटितं प्रत्यक्षलक्षणम् ।

तयोरुभयोरिति । नित्यप्रत्यक्षजन्यप्रत्यक्षयोरित्यर्थः । (जन्यप्रत्यक्षं ईश्वरप्रत्यक्षातिरिक्तप्रत्यक्षस्यैव ।)

तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥

दीपिका

तद्द्विविधमिति। निर्विकल्पकस्य लक्षणमाह—निष्प्रकारकमिति। विशेषणविशेष्यसम्बन्धानवगाहिज्ञानमित्यर्थः ॥

ननु—निर्विकल्पके किं प्रमाणमिति चेन्न। 'गौ'रिति विशिष्टज्ञानं—विशेषणज्ञानजन्यं—विशिष्टज्ञानत्वात्,—दण्डीति ज्ञानवदि'—त्यनुमानस्य प्रमाणत्वात्। विशेषणज्ञानस्यापि सविकल्पकत्वेऽन-

विवृतिः

वस्तुतो ज्ञानाकरणकज्ञानत्वमेव प्रत्यक्षप्रमाया लक्षणं वक्तव्यमन्यथा त्वङ्मनःसंयोगादिजन्येऽनुमित्यादावतिव्याप्तिः स्यादिति ध्येयम् ॥ प्रकारताशून्यं ज्ञानं यथा निर्विकल्पकं, तथा विशेष्यतादिशून्यज्ञानमपि विनिगमनाविरहेण निर्विकल्पकं भवितुमर्हतीत्याशयेन तथैव निर्विकल्पकलक्षणमाह—विशेषणेति। विशेषणानवगाहिज्ञानं = विशेषणताशून्यं ज्ञानम्, विशेष्यानवगाहि ज्ञानं = विशेष्यताशून्यं ज्ञानं, सम्बन्धानवगाहिज्ञानं = संसर्गताशून्यं ज्ञानं, एतत् त्रितयमेव विनिगमनाविरहान्निर्विकल्पकमित्यर्थः ॥ शंकते—नन्विति ॥ किं प्रमाणमिति। तथा च न किमपि प्रमाणमस्तीत्याशयः। उत्तरयति-नेति। गौरिति = गौरित्याकारकं। विशिष्टज्ञानं = गोत्वविशिष्टगोविषयकज्ञानम्। विशेषणज्ञानजन्यमिति साध्यम्। तत्र हेतुमाह—विशिष्टेति। किञ्चिद्विशिष्टविषयकज्ञानत्वादित्यर्थः। दृष्टान्तमाह—दण्डीति। दण्डविशिष्टपुरुषविषयकज्ञानवदित्यर्थः ॥ प्रमाणत्वादिति।

न्यायबोधिनी

संग्रहः। इन्द्रियार्थसन्निकर्षेति। जन्यप्रत्यक्षस्यैव लक्ष्यत्वमित्यभिप्रायेणेदं लक्षणम्। प्रत्यक्षं विभजते—निर्विकल्पकमिति ॥

तल्लक्षयति—तत्र निष्प्रकारकमिति। प्रकारताशून्यज्ञान-

सप्रकारकं ज्ञानं-सविकल्पकम् । यथा 'डित्थोऽयं'-'ब्राह्मणोऽयं'-'श्यामोऽयमि'ति ॥

दीपिका

वस्थाप्रसङ्गान्निर्विकल्पकसिद्धिः ॥ सविकल्पकं लक्षयति—स॰

विवृतिः

तथा च गोत्वविशिष्टगोविषयकगौरित्याकारकप्रत्यक्षपूर्वमवश्यं गोत्वज्ञान॰ सत्त्वमंगीकर्त्तव्यं, अन्यथा गोत्वज्ञानरूपकारणाभावेन गोत्वविशिष्टस्य प्रत्य॰ नुदयप्रसंगः स्यात्, तादृशञ्च गोत्वज्ञानं गोगोत्वयोर्निर्विकल्पकमेव ना॰ दित्याशयः। ननु गोत्वविशिष्टगोविषयकप्रत्यक्षकारणीभूतं यत् गोत्व॰ तदपि गोत्वविशिष्टगोविषयकविशिष्टज्ञानमेव, किमतिरिक्तनिर्विकल्पक॰ कल्पनयेत्यत आह—विशेषणज्ञानस्येति । विशिष्टज्ञानपूर्ववर्तिनो गो॰ दिज्ञानस्येत्यर्थः ॥ सविकल्पकत्वे=गोत्वादिविशिष्टगोविषयकज्ञानस्वरूप॰ अनवस्थेति। गोत्वादिविशिष्टज्ञानपूर्वं तादृशं ज्ञानं, तत्पूर्वमपि तथेत्या॰ रीत्या विशिष्टज्ञानकल्पने अनवस्थितविशिष्टज्ञानधाराया आपत्तिः स॰

न्यायबोधिनी

त्वमेव-निर्विकल्पकत्वमित्यर्थः । निर्विकल्पके चतुर्थी विषयता स्वी॰ क्रियते, न तु 'त्रिविधविषयतामध्ये कापि तत्रास्ति, अतो 'विशेष्य॰ शून्यज्ञानत्वं' 'संसर्गताशून्यज्ञानत्वमि'त्यपि लक्षणं संभवति ॥

सविकल्पकं लक्षयति—सप्रकारकमिति । विषयता॰ ज्ञाननिरूपितत्वाज्ज्ञानस्य विषयतानिरूपकत्वेन 'प्रकारतानिरूप॰

---

चतुर्थी विषयतेति । प्रकारत्वविशेष्यत्वसंसर्गत्वेभ्योऽतिरिक्तेत्यर्थः । ॰ च विनिगमनाविरहात्—विशेष्यताशून्यं, संसर्गताशून्यं वा ज्ञानं निर्विक॰ भवितुमर्हतीति—भावः ।

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसंनिकर्षः षड्विधः—संयोगः,

दीपिका

कारकमिति। नामजात्यादिविशेषणविशेष्यसम्बन्धावगाहि ज्ञानमित्यर्थः॥ सविकल्पकमुदाहरति—यथेति॥

विवृतिः

दिति भावः॥ निर्विकल्पकसिद्धिरिति। विशिष्टज्ञानोत्पत्त्यर्थं तत्पूर्वं विशेषणानवगाहिज्ञानस्य सिद्धिरित्यर्थः॥ सविकल्पकस्य स्वयं लक्षणान्याह—नामेति। नामावगाहि, जात्यवगाहि, विशेषणावगाहि, विशेष्यावगाहि च यज्ज्ञानं तत् प्रत्येकमेव सविकल्पकमित्यर्थः॥ केचित्तु—सविकल्पकमिति मूलं सविकल्पकविशिष्टज्ञानपरम्, तल्लक्षणमाह—विशेषणेति। तथा च विशेषणप्रतियोगिको विशेष्यानुयोगिको यः सम्बन्धस्तदवगाहिज्ञानं तादृशविशिष्टज्ञानमित्यर्थः, तेन न भ्रमेऽतिव्याप्तिरित्याहुः। सवि-

न्यायबोधिनी

ज्ञानत्वं' सविकल्पकस्य लक्षणम्। एवं 'विशेष्यतानिरूपकज्ञानत्वं' 'संसर्गतानिरूपकज्ञानत्वमि'त्यपि लक्षणं संभवति। उदाहरणम्—यथेति। 'इदन्त्वावच्छिन्नविशेष्यतानिरूपित-डित्थत्वप्रकारताशालिज्ञानं' 'ब्राह्मणत्वप्रकारताशालिज्ञानं' च-सविकल्पकमित्यर्थः॥

चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान्विभजते—संयोग इत्यादिना। द्रव्यवृत्तिलौकिकविषयतासंबन्धेन

---

सप्रकारकमित्यस्योपलक्षणत्वमाह-एवमिति॥ इदन्त्वेति। इदन्त्वविशिष्टेदम्पदार्थनिष्ठविशेष्यतानिरूपिता या डित्थत्वनिष्ठा प्रकारता तन्निरूपकं ज्ञानमित्यर्थः।

संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेत-समवायो, विशेषणविशेष्यभावश्चेति ॥

## दीपिका

इन्द्रियार्थसन्निकर्षं विभजते—प्रत्यक्षेति ॥ संयोगसन्निकर्ष-

## विवृतिः

कल्पकज्ञानस्याकारमाह—मूले-डित्थोऽयमिति ॥ मूले-प्रत्यक्षेति। प्रत्यक्षप्रमायाः साक्षात्कारणीभूतः सम्बन्धः इत्यर्थः। षड्विधं सन्निकर्षं प्रदर्शयति—संयोग इति। इन्द्रियार्थयोः संयोग इत्यर्थः। एवमग्रेऽपि घटप्रत्यक्षजनने = घटप्रत्यक्षोत्पत्तौ। संयोगः = चक्षुःस्वरूपेन्द्रिय-घटस्व-रूपपदार्थयोः संयोगः। सन्निकर्षः = सम्बन्धः। एवं त्वचा प्रत्यक्षजनने

## न्यायबोधिनी

चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगः कारणम्। द्रव्यसमवेतवृत्ति-लौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवा-यस्य हेतुत्वम्। द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम्। द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि घ्राणरसनश्रवणानि गुणग्राहकाणि। अतस्त्वगिन्द्रियस्थले द्रव्यवृत्ति-लौकिकविषयतासंबन्धेन त्वाचप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतुता। एवं द्रव्यसमवेतत्वाचप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयुक्त-समवायस्य हेतुता। द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजाति-स्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता। एवमात्ममानस-प्रत्यक्षे मनःसंयोगस्य हेतुता। आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य हेतुता। आत्मसमवेतसमवेतसुखत्वादि-

चक्षुषा घटप्रत्यक्षजनने 'संयोगः' संनिकर्षः ॥

घटरूपप्रत्यक्षजनने 'संयुक्तसमवायः' संनिकर्षः, चक्षुः-संयुक्ते घटे रूपस्य समवायात् ॥

रूपत्वसामान्यप्रत्यक्षे 'संयुक्तसमवेतसमवायः' संनिकर्षः। चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात् ॥

श्रोत्रेण शब्दसाक्षात्कारे 'समवायः' संनिकर्षः, कर्ण-

दीपिका

मुदाहरति—चक्षुषेति। द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्ष इत्यर्थः। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते ॥ संयुक्तसमवायमुदाहरति—घटरूपेति। तत्र युक्तिमाह—चक्षुःसंयुक्तेति। संयुक्तसमवेतसमवायमुदा-

विवृतिः

संयोगादयः सन्निकर्षा वेदितव्याः। दीपिकायां-आत्मेति। प्रथममात्म-मनःसंयोगो भवति, ततः-इन्द्रियमनःसंयोगः, ततः-इन्द्रियार्थयोः सं-योगः, ततः प्रत्यक्षप्रमोत्पद्यत इत्यर्थः, तदुपपादयति = शब्दे श्रोत्रसमवेत-त्वमुपपादयति, समीपस्थशब्दस्य श्रोत्रसमवेतत्वसम्भवेऽपि दूरस्थशब्दस्य

न्यायबोधिनी

मानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता। रसनघ्राण-योस्तु रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव तत्र हेतुता वाच्या। श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाश-गुणत्वेन श्रवणेन्द्रियेण च समं शब्दस्य समवायः संनिकर्षः।

---

द्वितीयतृतीययोरिति। घ्राणादीन्द्रियसंयुक्तसमवायेन्द्रियसंयुक्तसमवेतसम-वाययोरित्यर्थः।

विवरवर्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात्, गुणगुणिनोश्च समवायात् ॥

दीपिका

हरति—रूपत्वेति । समवायमुदाहरति—श्रोत्रेणेति । तदुपपादयति—कर्णेति । ननु दूरस्थशब्दस्य कथं श्रोत्रेण सम्बन्ध इति चेन्न । वीचीतरङ्गन्यायेन—कदम्बमुकुलन्यायेन—वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य श्रोत्रसम्बन्धात् प्रत्यक्षत्व-

विवृतिः

तथात्वं कथमुपपद्यते इत्याशङ्कते—नन्विति । कथं = केन प्रकारेण । श्रोत्रेण = श्रोत्रात्मकाकाशेन । सम्बन्धः = समवायः । ततः कर्णविवरावच्छिन्नाकाशानुयोगिकत्वविशिष्टसमवायस्य दूरस्थशब्दे सम्भावनैव नास्तीति भावः । समाधत्ते—नेति । वीचीतरंगन्यायेनेति । तथा च यथा वीचितरङ्गादयः एकानन्तरमपर इत्यादिरीत्या तटसम्बन्धिनो भवन्ति तथा दूरस्थशब्दा अपि एकानन्तरमपर इत्यादिरीत्या कर्णसमवेता भवन्त्येवेति भावः । न्यायान्तरमाह—कदम्बेति । न्यायसाम्यमाह-शब्दादिति । श्रोत्रदेशे जातस्य = कर्णविवरावच्छेदेनोत्पन्नस्य शब्दस्य । श्रोत्रसम्बन्धात् = श्रोत्रसमवायात् कारणात् । प्रत्यक्षत्वसम्भवादिति । शब्दस्येत्यादिः । तदुपपादयति = सन्निकर्षात्मकविशेषणत्वमुपपादयति । ननु विशेष्यतात्मकसन्निकर्षाऽप्रदर्शनेन मूलस्य न्यूनत्वमतः स्वयं तं प्रदर्श-

न्यायबोधिनी

शब्दवृत्तिशब्दत्व-कत्व-खत्वादिजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता । अभावप्रत्यक्षे विशेषणविशेष्यभावो नाम विशेषणतासंनिकर्षः, पञ्चविधसंनिकर्षोपरि विशेषणता योजनीया, तथाहि—द्रव्याधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता ।

शब्दत्वसाक्षात्कारे 'समवेतसमवायः' संनिकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥

अभावप्रत्यक्षे 'विशेषणविशेष्यभावः' संनिकर्षः, घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥

दीपिका

सम्भवात् । समवेतसमवायमुदाहरति—शब्दत्वेति । विशेषणविशेष्यभावमुदाहरति—अभावेति । तदुपपादयति—घटाभाववदिति, भूतलं—विशेष्यम्, घटाभावो—विशेषणम्, 'भूतले घटो नास्ती'त्यत्राऽभावस्य विशेष्यत्वं द्रष्टव्यम् । एतेन अनुपलब्धेः

विवृतिः

यति—भूतले इति । द्रष्टव्यमिति । तथा च भूतले घटाभाव इति प्रत्यक्षे चक्षुःसंयुक्ते भूतले घटाभावस्य विशेष्यत्वात् विशेष्यतात्मक एव तत्र सन्निकर्षो घटाभावप्रत्यक्षजनक इति भावः । एतेनेति । अभावस्येन्द्रियग्राह्यत्वेनेत्यर्थः । अनुपलब्धेः = उपलब्ध्यभावस्य । प्रमाणान्तरत्वं =

न्यायबोधिनी

द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता । द्रव्यसमवेतसमवेताधिकरणकाऽभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता । संयोगस्थाने संयुक्तपदं घटयित्वा समवायस्थाने समवेतपदं घटयित्वा अभावप्रत्यक्षस्थले निर्वाह्यम् । तथा घटद्रव्यसमवेतं घटत्वं पृथ्वीत्वादिकं रूपादिकं च, तत्र नीलादौ पीतत्वाभावः, घटत्वादिजातौ पटत्वाभावश्च वर्तते, स चाभावः संयुक्तसमवेतविशेषणतासंनिकर्षेण गृह्यते । एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रिय-

दीपिका

प्रमाणान्तरत्वं—निरस्तम्, 'यद्यत्र घटोऽभविष्यत्—तदा भूतलमिवाद्रक्ष्यत्—दर्शनाभावान्नास्ती'ति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धेः सहकृतेनेन्द्रियेणैवाऽभावज्ञानोपपत्तौ अनुपलब्धेः प्रमाणान्तरत्वासम्भवात्, अधिकरणत्वज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुपलब्धेः करणत्वस्यायुक्तत्वात्। विशेषणविशेष्यभावो—विशेषणविशेष्यस्वरूपमेव—नातिरिक्तः सम्बन्धः। प्रत्यक्षज्ञानमुप-

विवृतिः

प्रत्यक्षाद्यतिरिक्तत्वेन पराभिमतप्रमाणत्वम्। निरस्तमिति। तथा च सन्निकर्षद्वारकेन्द्रियेणैवाभावप्रत्यक्षजननसम्भवात् नानुपलब्धिः प्रमाणान्तरमिति भावः। अनुपलब्धेरिन्द्रियसहकारित्वन्तु नैयायिकानामपि सम्मतमित्याह—यद्यत्रेति। अस्मिन् भूतले यदीत्यर्थः। घटोऽभविष्यत् = घटः स्यात् तदा = तर्हि। भूतलमिवेति। घटवत्तया भूतलमुपलभ्येत यतो नोपलभ्यते अतो घटो नास्त्येवेति समुदिततात्पर्यम्। इति = इत्याकारिकायाः। तर्कितेति। तर्कितः = आपत्तिविषयीभूतो यः प्रतियोगी घटः तस्य सत्त्वविरोधिन्याः=तस्याऽभावसाधिकाया अनुपलब्धेरित्यर्थः। अभावज्ञानोत्पत्तौ= अभावप्रत्यक्षोत्पत्तौ। अनुपलब्धेः = योग्यतावतः उपलब्ध्यभावस्याऽज्ञातस्य। नन्वनुपलब्धेः सहकारिकारणत्वकल्पनापेक्षया करणत्वकल्पनमेव लाघवमित्यत आह—अधिकरणत्वेति। तथा घटाभाववद्भूतलमित्याकारकज्ञाननिष्ठभूतलविषयकत्वप्रयोजकमवश्यमेवेन्द्रियं वाच्यम् अभावविषयकत्वमात्रप्रयोजिकाया अनुपलब्धेस्तादृशभूतलविषयकत्वाऽप्रयोजकत्वात्, एवं च भूतलज्ञानार्थमपेक्ष्यमाणेनाऽवश्यक्लृप्तकारणभावेनेन्द्रियेणैवाऽभावप्रत्यक्षजननसम्भवात् अभावप्रत्यक्षकरणत्वेनातिरिक्तानुपलब्धिस्वीकारो निर्युक्तिक इति भावः। विशेणतात्मको विशेष्यतात्मकोऽपि नास्माकमतिरिक्तः सम्बन्धः, अपि तु विशेषणविशेष्यस्वरूप एवेत्याह—विशेषणेति॥

एवं संनिकर्षषट्कजन्यं ज्ञानं = प्रत्यक्षं, तत्करणम्— इन्द्रियं, तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥

दीपिका

संहरन् तस्य करणमाह—एवमिति। असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः॥ प्रत्यक्षमुपसंहरति—तस्मादिति॥

॥ इति तर्कदीपिकायां प्रत्यक्षपरिच्छेदः॥

विवृतिः

न च विशेषणविशेष्ययोर्द्वैविध्यात् सन्निकर्षाणां षड्विधत्वव्याघात इति वाच्यम्। विशेषणत्वविशेष्यत्वयोरन्यतरत्वेनानुगमसम्भवादिति ध्येयम्। असाधारणकारणत्वादित्यस्य पूर्ववदर्थो बोध्यः। इन्द्रियम् = चक्षुरादिकम्, प्रत्यक्षज्ञानकरणं = प्रत्यक्षप्रमाकरणम्। यद्यपि धूमत्वादिना निखिलधूमादिप्रत्यक्षार्थं तदिन्द्रियसम्बद्धधूमादिधर्मिकतदिन्द्रियजन्यप्रत्यक्षविषयधूमत्वादिः, = परमाणुत्वादिना परमाण्वादिमानसप्रत्यक्षार्थं वा ज्ञानविषयीभूतपरमाणुत्वादिरलौकिकसामान्यलक्षणानामकः सन्निकर्षः स्वीकर्तव्यः, एवम् सुरभिचन्दनमित्याकारकचाक्षुषे सौरभभानार्थं तद्विषयकप्रत्यक्षे तद्विषयकस्मरणस्याऽलौकिकज्ञानलक्षणानामकस्य सन्निकर्षस्यावश्यमभ्युपेयत्वम्, एवं योगिनां समस्तवस्तुप्रत्यक्षार्थं योगजधर्मोऽपि कश्चिदलौकिकः सन्निकर्षः स्वीकर्तव्यः, तथापि तत्तत्सन्निकर्षादीनां सविवादतया नेह ते प्रदर्शिता मूलकृतेत्याशयेनाह—उपसंहरतीति दिक्।

॥ इति दीपिकाविवृतौ प्रत्यक्षपरिच्छेदः समाप्तः॥

न्यायबोधिनी

संयुक्तसमवेतसमवेतविशेषणतासंनिकर्षेण गृह्यते,—घटसमवेतं नीलं, तत्समवेतं नीलत्वं, तद्विशेषणता पीतत्वाभावे, वर्तत इति संक्षेपः।

❀ इति न्यायबोधिन्यां प्रत्यक्षपरिच्छेदः ❀

## ❀ अथाऽनुमानपरिच्छेदः ❀



**अनुमितिकरणम्–अनुमानम् ।**

**परामर्शजन्यं ज्ञानम्–अनुमितिः ।**

दीपिका

अनुमानं लक्षयति—**अनुमितिकरणमिति** । अनुमिते-

विवृतिः

**मूले—अनुमितीति** । अनुमितिप्रमाया यत् करणं तदनुमानम्, तच्च व्याप्तिज्ञानं, ज्ञायमानलिंगं वेत्यन्यदेतत् । क्रियालक्षणं विना करण-

न्यायबोधिनी

अनुमानं लक्षयति—**अनुमितीति** । अनुमितौ व्याप्तिज्ञानं–करणं, परामर्शो-व्यापारः, अनुमितिः–फलं,–कार्यमित्यर्थः । परामर्शस्य व्याप्तिज्ञानजन्यत्वाद्व्याप्तिज्ञानजन्यानुमितिजनकत्वात्तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम् । अनुमितिकरणत्वमनुमानस्य लक्षणम् । अनुमानं–व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम् ॥

**परामर्शजन्यमिति** । 'परामर्शजन्यत्वविशिष्टज्ञानत्वम'नुमितेर्लक्षणम् । अत्र 'ज्ञानत्व'मात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय—'परामर्शजन्यत्वे सती'ति विशेषणोपादानम् ।

---

**अनुमानमिति** । अनुमानं व्याप्तिज्ञानमिति तु नव्यमतं, परामर्श एवानुमितिकरणमिति तु प्राचीनमतमित्यवधेयम् ।

दीपिका

लक्षणमाह—परामर्शेति । ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः, स्थाणुपुरुषसंशयानन्तरं 'पुरुषत्वव्याप्यकरादिमान्-अयम्'—इति परामर्शे सति 'पुरुष एव' इति प्रत्यक्षजननात्। न च—तत्रानु-

विवृतिः

लक्षणस्याऽसम्भवादाह—परामर्शजन्यमिति। परामर्शत्वावच्छिन्नजन्यमित्यर्थः, तेन न विषयत्वावच्छिन्नजन्ये परामर्शप्रत्यक्षेऽतिव्याप्तिः। नचैवं 'वह्निव्याप्यधूमवान् पर्वत' इत्याकारकनिश्चयात्मकपरामर्शजन्यायां 'वह्निव्याप्यधूमवान् पर्वत' इत्याकारकस्मृतावतिव्याप्तिरिति वाच्यम्। परामर्शजन्यं प्रकृतव्याप्यविषयकं यज् ज्ञानं तस्यैवानुमितित्वेन विवक्षितत्वात्। एतेन परामर्शत्वावच्छिन्नजन्यत्वस्य परामर्शप्रत्यक्षे स्वीकारेऽपि न तत्रातिव्याप्तिः, तादृशपरामर्शप्रत्यक्षस्य प्रकृतव्याप्तिविषयकत्वात्॥ प्राचीनास्तु-लिंगपरामर्शोऽनुमितिकरणम्, परामर्शजन्या अनुमितिः=व्यापारः, अनुमित्यनुव्यवसायः=फलमिति वदन्ति। वस्तुतो व्याप्तिज्ञानकरणकज्ञानस्यैवानुमितित्वमिति न कोऽपि दोष इत्यवधेयम्। प्रत्यक्षजन्यत्वेनानुमानस्य, अनुमानजन्यत्वेनानुमितेर्निरूपणमिति प्राचीनमतमवलम्ब्याऽऽह दीपिकायां—अनुमितेर्लक्षणमाहेति। तथा चानुमितिघटितानुमानलक्षणस्य प्रथमाभिधानेऽपि न क्षतिरित्याशयः। शंकते—नन्विति। संशयोत्तरप्रत्यक्षे = संशयोत्तरसंशयीयैककोटिव्याप्यवत्त्वनिश्चयोत्तरजायमाने तत्कोटिप्रत्यक्षनिश्चये॥ अतिव्याप्तिरिति। तादृशव्याप्यवत्त्वनिश्चय-

न्यायबोधिनी

परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय—ज्ञानत्वोपादानम्॥

---

परामर्शध्वंस इति। ध्वंसं प्रति प्रतियोगित्वेन तस्य हेतुत्वादित्याशयः।

दीपिका

मितिरेव इति—**वाच्यम्**। 'पुरुषं साक्षात्करोमी'त्यनुव्यवसायविरोधादिति चेन्न। पक्षतासहकृत–परामर्शजन्यत्वस्य विवक्षित-

विवृतिः

स्य परामर्शस्वरूपतया तज्जन्यत्वस्योक्तप्रत्यक्षनिश्चये सत्त्वादिति भावः। निरुक्तप्रत्यक्षनिश्चये निरुक्तव्याप्यवत्त्वनिश्चयस्य हेतुत्वं व्यवस्थापयति-**स्थाणिवंति**। 'अयं स्थाणुर्वा पुरुषो वे'त्याकारकसंशयानन्तरमित्यर्थः। पुरुषत्वस्य स्थाणुत्वाभावरूपतया भावाऽभावकोटिक एवायं संशय इत्यवधेयम्। पुरुषत्वव्याप्यकरादिमान् = स्थाणुत्वाभावात्मकपुरुषत्वव्याप्यकरादिमान्। इति परामर्शे सति = इत्याकारकनिश्चये सति। पुरुष एव = अयं पुरुष एव। एवकारेण इदन्त्वावच्छेदेन स्थाणुत्वव्यवच्छेदः। इति प्रत्यक्षजननात् = इत्याकारकप्रत्यक्षनिश्चयोत्पादात्। तथा च निरुक्तसंशयवतोऽपि तादृशपरामर्शशून्यस्य 'अयं पुरुषो वे'त्याकारकप्रत्यक्षानुदयात् संशयोत्तरं पुरुषत्वव्याप्यकरादिमानयम्' इत्याकारकपरामर्शस्याऽवश्यं तादृशप्रत्यक्षे कारणत्वं वक्तव्यमित्याशयः। ननु यदि परामर्शोत्तरमेव पुरुष एवेत्याकारकनिश्चयस्तदा तस्यानुमितित्वमेवास्तु इत्याशंकां निराकरोति-**पुरुषमित्यादि**। पुरुष एवायमिति निश्चयोत्तरं पुरुषं साक्षात्करोमि न त्वनुमिनोमीत्यनुव्यवसायस्य = इत्याकारकपूर्वजातज्ञानप्रत्यक्षस्य विरोधात् = पुरुष एवेत्याकारकज्ञानस्यानुमितित्वे बाधकत्वादित्यर्थः। 'पुरुष एवायम्' इत्याकारकधारावाहिप्रत्यक्षस्योदयात्तादृशप्रत्यक्षे वक्ष्यमाणसिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपायाः पक्षताया हेतुत्वं कथमपि न सम्भवति, अपि त्वनुमितावेव तस्या हेतुत्वमित्याशयेन समाधत्ते-**नेति**। **विवक्षितत्वादिति**। अनुमितिलक्षणत्वेनेत्यादिः। तथा च पक्षताशून्यकालेऽपि 'अयं पुरुष एवे'त्याकारकप्रत्यक्षजननात् पक्षतासहकृतपरामर्शजन्यत्वस्य तत्रासम्भवेन न तत्रातिव्याप्तिरिति भावः॥ **इदमुपलक्षणम्**। भ्रमविरो-

दीपिका

त्वात्॥ सिषाधयिषाविरहसहकृत–सिद्ध्यभावः–पक्षता, साध्यसिद्धिः- अनुमितिप्रतिबन्धिका, सिद्धिसत्त्वेऽपि—'अनुमिनुयामि'तीच्छायाम् अनुमितिदर्शनात् सिषाधयिषोत्तेजिका, ततश्चोत्तेजकाऽभावविशिष्ट– मण्यभावस्य दाहकारणत्ववत् सिषाधयिषाविरहसहकृत–सिद्ध्य- भावस्याऽप्यनुमितिकारणत्वम्॥

विवृतिः

धित्वावच्छिन्नजन्ये तादृशप्रत्यक्षे परामर्शत्वावच्छिन्नजन्यताघटितलक्षण- स्यासत्त्वादपि न तत्रातिव्याप्तिरित्यपि द्रष्टव्यम्। ननु यदि साध्यसंशय- रूपा पक्षता तदा संशयोत्तरविशेषदर्शनाज्जायमानप्रत्यक्षादौ संशयरूप- पक्षतासहकृतपरामर्शजन्यतायाः सत्त्वात् तादृशप्रत्यक्षव्यक्तावतिव्याप्तिर्दुर्वा- रैवेत्यत आह—सिषाधयिषेति। सिषाधयिषायाः = साध्यानुमिति- विषयिण्या इच्छायाः, यो विरहः = अभावः; तद्विशिष्टा या सिद्धिः = साध्यनिश्चयस्तदभावः पक्षतेत्यर्थः। तथा च तादृशप्रत्यक्षे संशयस्य परामर्शसहकारित्वेऽपि निरुक्तपक्षतायास्तत्सहकारित्वाभावान्न तत्रातिव्या- प्तिरित्याशयः। निरुक्तपक्षताया अनुमितिजनकपरामर्शसहकारित्वं व्यवस्था- पयति—साध्यसिद्धिरिति। प्रकृतपक्षे प्रकृतसाध्यनिश्चय इत्यर्थः। अनुमितिप्रतिबन्धिका=अनुमित्यनुत्पादप्रयोजिका। नन्वेवमनुमित्साकालीन- सिद्ध्युत्तरमपि अनुमितिर्न स्यादित्यत आह—सिद्धीति। तादृशसाध्य- निश्चयसत्त्वेऽपीत्यर्थः। अनुमिनुयामिति। साध्यमित्यादिः। इतीच्छायां = इत्याकारकेच्छासत्त्वे। अनुमितिदर्शनात् = अनुमित्युत्पादस्यानुभविक- त्वात्। सिषाधयिषा = साध्यानुमितीच्छा॥ उत्तेजिकेति। सिद्धिविशे- षणीभूतो योऽभावस्तत्प्रतियोगित्वरूपा वाच्या। प्रतिबन्धकतावच्छेदकीभूता- भावप्रतियोगित्वस्यैवोत्तेजकत्वरूपत्वादिति भावः। तादृशेच्छाविरहविशिष्टायाः अनुमितिप्रतिबन्धकीभूतायाः सिद्धेरभावस्यानुमितिहेतुत्वं दृष्टान्तेन द्रढयति–

व्याप्तिविशिष्टपक्षधर्मताज्ञानं–परामर्शः, यथा–'वन्हि-

दीपिका

परामर्शं लक्षयति—व्याप्तीति । व्याप्तिविषयकं यत् पक्ष-धर्मताज्ञानं स परामर्श इत्यर्थः । परामर्शमभिनीय दर्शयति—

विवृतिः

ततश्चेति । यतः सिषाधयिषा उत्तेजिका, अत एवेत्यर्थः । तथा च यथा दाहप्रतिबन्धकमणिसत्त्वेऽपि उत्तेजकमणिसमवधानदशायां दाहोत्पादस्यानुभविकत्वाद्दाहं प्रत्यवश्यं न मणिसामान्याभावः कारणमपि तु उत्तेजकमण्यभावविशिष्टमणिसामान्याभाव एव कारणं वक्तव्यम्, तथा अनुमित्सादशायां सिद्धिसत्त्वेऽपि अनुमित्युत्पादात् सिद्ध्यभावमात्रं नानुमितिकारणं, अपि तु अनुमित्साविरहविशिष्टायाः सिद्धेरेवाऽभावोऽनुमितिकारणमिति तादृशाभावरूपपक्षताया अनुमितिकारणपरामर्शसहकारित्वं सर्वैरेवावश्यमङ्गीकर्तव्यमिति भावः । न च लाघवात् साध्यसंशयस्यैव पक्षतात्वमस्त्विति वाच्यम् । संशयविनाशेऽपि अनुमित्युत्पादेन पक्षताविधया तस्यानुमितिहेतुत्वस्यासम्भवात्, अनुमित्साविरहकालेऽपि अनुमितिदर्शनात् उत्तेजकीभूताया इच्छाया अपि न पक्षतात्वं सयुक्तिकमिति संक्षेपः ।

मूले-व्याप्तीति । साध्यनिरूपितव्याप्तिविशेषणको यः पक्षे हेतोर्वृत्तित्वविषयको निश्चयः स परामर्श इत्यर्थः । स च 'साध्यव्याप्यहेतुमान् पक्ष' इत्याकारकः 'साध्यव्याप्यहेतुः पक्षे' इत्याकारको वा ज्ञेयः । न चाननुगमः, साध्यविषयतानिरूपितव्याप्तिविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयताशालिनिश्चयत्वेन द्वयोरनुगमसम्भवादिति ध्येयम् । दीपिकायां—

न्यायबोधिनी

अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्ट—व्याप्तिविशिष्टेति । व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं चेति कर्मधारये—

व्याप्यधूमवानयं पर्वत' इति ज्ञानं-परामर्शः, तज्जन्यं-'पर्वतो-वह्निमानि'ति ज्ञानम्-अनुमितिः ॥

दीपिका

यथेति। अनुमितिमभिनीय दर्शयति—तज्जन्यमिति। परामर्शजन्यमित्यर्थः ॥

विवृतिः

व्याप्तिविषयकमिति। व्याप्तिविशेषणकमित्यर्थः। पक्षधर्मताज्ञानं = पक्षनिरूपिताया हेतुनिष्ठवृत्तिताया निश्चयः। परामर्शमभिनीय दर्शयति = परामर्शाकारं प्रदर्शयति। एवमग्रेऽपि। मूले-इति ज्ञानमिति। इत्याकारको निश्चय इत्यर्थः॥ व्याप्त्यादिघटितपरामर्शस्य व्याप्त्यादिज्ञानं विना

न्यायबोधिनी

विशिष्टपदस्य प्रकारतानिरूपकत्वात्, पक्षधर्मताज्ञानमित्यत्र षष्ठ्या विषयत्वबोधनात्, धर्मतापदस्य संबन्धार्थकत्वाच्च, कर्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्गलाभेन च व्याप्तिप्रकारकाभिन्नं यत्पक्षसंबन्धविषयकं ज्ञानं तत्परामर्श इति लभ्यते। एवं सति 'धूमो वह्निव्याप्यः आलोकवान्पर्वतः' इत्याकारकसमूहालम्बनेऽप्युक्तपरामर्शलक्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय—'पक्षनिष्ठविशेष्यतानिरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या व्याप्तिनिष्ठा प्रकारता तच्छालि ज्ञानं—परामर्श इति निष्कर्षः। एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम्। अनुमितिपरा-

---

प्रकारतानिरूपकत्वादिति। प्रकारतानिरूपकार्थे लाक्षणिकत्वादित्यर्थः।

पक्षनिष्ठेति। इदञ्च पक्षविशेष्यकपरामर्शस्यानुमितिहेतुत्वमते, अन्यथा तु पक्षविषयतानिरूपितसाध्यव्याप्यहेतुविषयताशालिनिश्चयः-वह्निव्याप्यधूमः पर्वते, तादृशधूमवान् वा पर्वत इत्याकारकः।

'यत्र यत्र धूमस्तत्र तत्राग्निरिति' साहचर्यनियमो—व्याप्तिः ॥

दीपिका

व्याप्तेर्लक्षणमाह—यत्रेति । 'यत्र यत्र धूमस्तत्र तत्राग्निरि'ति व्याप्तेरभिनयः । 'साहचर्य्यनियम' इति लक्षणम्, साहचर्य्यं = सामानाधिकरण्यं, तस्य नियमः = हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः ॥

विवृतिः

ज्ञातुमशक्यत्वात् प्रथमतो व्याप्तेः स्वरूपमाह मूले—यत्रेति । यस्मिन्नधिकरणे इत्यर्थः । तत्र = तस्मिन्नधिकरणे । अग्निः = वह्निः । इति=इत्याकारको यो हेतुव्यापकत्वविशिष्टसाध्याधिकरणवृत्तित्वस्वरूपः साहचर्यनियमः स एव व्याप्तिपदार्थ इत्यर्थः ॥ दीपिकायां व्याप्तेरभिनय इति । व्याप्तेः स्वरूपनिर्देश इत्यर्थः । लक्षणं = असाधारणः सद्धेतुनिष्ठो धर्मः । नियमपदार्थमाह-हेत्विति । हेत्वधिकरणे वर्त्तमानः प्रतियोग्यधिकरणे चावर्तमानो योऽत्यन्ताभावस्तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं, तदवच्छिन्नस्य साध्यस्याधिकरणनिरूपितहेतुनिष्ठवृत्तित्वं व्याप्तिरित्यर्थः । इदं तु तत्त्वम्-

न्यायबोधिनी

मर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम्—'पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित—संयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति वह्निव्याप्तिप्रकारतानिरूपिता या धूमत्वावच्छिन्नप्रकारता तन्निरूपिता या पर्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः' —कारणम्, स च निर्णयः—'वह्निव्याप्यधूमवान्पर्वत' इत्याकारको बोध्यः ॥

यत्र यत्रेति । 'यत्र'पदवीप्सावशाद्धूमाधिकरणे यावति

विवृतिः

प्रथमान्तपदोपस्थाप्यतावच्छेदकं साध्यम्, यथा वह्निमान् इत्युक्तौ 'वह्निमत्'-पदं प्रथमान्तं तदुपस्थाप्यतावच्छेदकीभूतो वन्हिः साध्यम्, द्रव्यमित्युक्तौ च द्रव्यत्वं तथा। पञ्चम्यन्तपदोपस्थाप्यो हेतुः, यथा धूमादित्युक्तौ पञ्चम्यन्तपदोपस्थाप्यो धूमो हेतुः, घटत्वादित्युक्तौ च घटत्वं तथा, हेतुश्च सद्धेतुरसद्धेतुरपि भवितुमर्हति। यस्य हेतोरधिकरणे यावत्येव साध्यं वर्तते स हेतुः सद्धेतुः, यथा वह्निमान् धूमादित्यादौ धूमस्याधिकरणे पर्वते महानसे चत्वरे गोष्ठे सर्वत्रैव वन्हिरूपसाध्यस्य विद्यमानतया धूमहेतुः सद्धेतुः। यस्य च हेतोर्यस्मिन् कस्मिन्नप्यधिकरणे साध्यमावर्तते स हेतुरसद्धेतुः, यथा धूमवान् वन्हेरित्यादौ वन्हिरूपहेतोः पर्वतचत्वरगोष्ठमहानसायोगोलकरूपयावदधिकरणान्तर्गते अयोगोलके धूमरूपसाध्यस्यासत्त्वात् वन्हिरूपहेतुरसद्धेतुः, तथा च सद्धेतुरेव निरुक्तव्याप्तिलक्षणलक्ष्यस्तत्रैव निरुक्ता व्याप्तिर्वर्तते, तथा हि—धूमाधिकरणपर्वतादौ वर्तमानस्य प्रतियोगिनो घटस्याधिकरणे चावर्तमानस्य घटाभावस्य प्रतियोगितावच्छेदकं यद्घटत्वं तद्भिन्नं यत्साध्यतावच्छेकं वन्हित्वं तदवच्छि-

न्यायबोधिनी

वह्निमत्त्वलाभात् यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम्, तदेव स्पष्टयति—साहचर्यनियम इति। एतदर्थस्तु—'नियतसाहचर्यं'—व्याप्तिरिति। नियतत्वं = व्यापकत्वम्॥ साहचर्यं नाम = सामानाधिकरण्यम्। तथा च—'धूमनियतवह्निसामानाधिकरण्यं' व्याप्तिरित्यर्थः। अत्र वह्नेर्धूमव्यापकत्वं नाम = धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, यथाहि—धूमाधिकरणे = पर्वतचत्वरमहानसादौ वर्तमानो योऽभावः = घटत्वाद्यवच्छि-

धूमनियतेति। धूमव्यापकवह्न्यधिकरणवृत्तित्वं धूमे व्याप्तिरित्यर्थः।

व्याप्यस्य पर्वतादिवृत्तित्वं-पक्षधर्मता ॥

दीपिका

पक्षधर्मतास्वरूपमाह—व्याप्यस्येति ।

विवृतिः

अधिकरणपर्वतवृत्तित्वस्य धूमरूपहेतौ सत्वात् वन्हिमान् धूमादित्यादौ लक्षणसमन्वयः । असद्धेतौ च निरुक्ता व्याप्तिर्न वर्तते, धूमवान् वन्हेरित्यादौ वन्हिरूपहेतोरधिकरणे अयःपिण्डे वर्तमानस्य प्रतियोग्यधिकरणे चावर्तमानस्य धूमाभावस्य प्रतियोगितावच्छेदकताया धूमत्वे सत्वात् । अधिकन्त्वस्मत्कृतसिद्धान्तलक्षणजागदीशीविवृतौ द्रष्टव्यमिति ।

मूले व्याप्यस्येति । साध्यव्याप्तिविशिष्टस्य हेतोरित्यर्थः । पर्वतादिवृत्तित्वं = पर्वतादिनिरूपिताधेयत्वम् । पक्षधर्मता = पक्षधर्मताशब्दार्थः ।

न्यायबोधिनी

न्नप्रतियोगिताकाभावः, न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः, कुतः ? पर्वतादौ वह्नेः सत्त्वात्, एवं सति धूमाधिकरणे = पर्वतचत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं घटत्वादिकम्—अनवच्छेदकं वह्नित्वं वह्नौ वर्ततेऽतो धूमव्यापकत्वं वह्नौ वर्तते । इयमन्वयव्याप्तिः सिद्धान्तानुसारेण । पूर्वपक्षव्याप्तिस्तु—साध्याभाववदवृत्तित्वम् । 'साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक—प्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाऽभाववन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव' इति निष्कर्षः । तच्च केवलान्वयिन्यव्याप्तमिति सिद्धान्तानुसरणम् ॥

साध्यतेति । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्ना-

**अनुमानं द्विविधं-स्वार्थं, परार्थं, च ॥**

**तत्र स्वार्थं = स्वानुमितिहेतुः, तथाहि—स्वयमेव भूयो-**

दीपिका

अनुमानं विभजते—**अनुमानमिति** । तद्द्वैविध्यं दर्शयति—**स्वार्थमित्यादिना** ॥ **तत्रेति** । उभयोर्मध्ये इत्यर्थः ॥ स्वार्थानुमानं दर्शयति—**स्वयमेवेति** ॥ **भूयोदर्शनेनेति** । ननु पार्थिवत्वलौहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि मण्यादौ व्यभिचारो-

विवृतिः

**मूले-अनुमानमिति** । अनुमितिकरणं प्राचीनमतसिद्धं लिङ्गपरामर्शात्मकमित्यर्थः । **तत्रेति** । तयोः-स्वार्थानुमानपरार्थानुमानयोर्मध्ये-इत्यर्थः । स्वानुमितिः = स्वकीयानुमितिः, स्वीयसाध्यनिश्चय इति यावत् । तस्य हेतुः = साक्षात्कारणम् । भूयोदर्शनेन = वारम्वारम् साध्यहेत्वोः सहचारप्रत्यक्षादिना । तस्मात् = लिङ्गपरामर्शात्कारणात् । इति = इत्याकारकं ज्ञानं = निश्चयः । दीपिकायां—**नन्विति** । **पार्थिवत्वेति** । पार्थिवत्वरूपहेतोर्लौहलेख्यत्वरूपसाध्यादावित्यर्थः । **शतश इति** । तथा च 'इयं—लौहलेख्या, पृथिवीत्वादि'त्यादौ सर्वत्रैव घटपटादौ पृथिवीत्वलौहलेख्यत्वयोः सामानाधिकरण्यस्य बहुधा प्रत्यक्षस्य विद्यमानत्वेऽपीत्यर्थः । **मण्यादाविति** । आदिना हीरकादिपरिग्रहः । **व्यभिचारोपलब्धेरिति** । पृथिवीत्वस्य म-

न्यायबोधिनी

अनुमानं विभजते—**स्वार्थमिति** ।

---

धिकरणेऽवर्तमानो यः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावस्तदधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकवृत्तित्वसामान्याभावो व्याप्तिरिति निष्कर्ष इत्यर्थः ।

दर्शनेन-'यत्र यत्र धूमस्तत्र तत्राग्निरि'ति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति—'यत्र यत्र धूमस्तत्र तत्राग्नि'रिति, तदनन्तरं-'वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानमुत्पद्यते, अयमेव-'लिङ्गपरामर्श' इत्युच्यते । तस्मात् 'पर्वतो वह्निमानि'ति ज्ञानमनुमितिरुत्पद्यते, तदेव स्वार्थानुमानम् ॥

दीपिका

पलब्धेर्भूयोदर्शनेन कथं व्याप्तिग्रह इति चेन्न । व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात् ॥

व्यभिचारज्ञानं द्विविधम्—निश्चयः, शङ्का च । तद्विरहः

विवृतिः

व्यादावपि सत्त्वेन तत्र लौहलेख्यत्वरूपसाध्यस्य विरहेण व्यभिचारनिश्चयस्य सत्त्वादित्यर्थः । भूयोदर्शनेन = भूयोदर्शनमात्रेण । कथं = केन प्रकारेण । व्याप्तिग्रह इति । कारणसत्त्वेऽपि व्याप्यग्रहात् भूयोदर्शनं व्याप्तिज्ञानजनकमेव न भवितुमर्हतीत्याशयः । उत्तरयति-नेति । व्यभिचारेति । व्यभिचारज्ञानाभावविशिष्टं यत् साध्यसाधनयोः सामानाधिकरण्यज्ञानं तस्येत्यर्थः । व्याप्तिग्राहकत्वात् = व्याप्तिज्ञानजनकत्वात् । तथा चोक्तस्थले व्यभिचारज्ञानस्य सत्त्वेन व्यभिचारज्ञानाभावविशिष्टसहचारज्ञानरूपकारणाभावात् न व्याप्तिग्रहः, विशेषणाभावस्य विशिष्टाभावप्रयोजकत्वादिति भावः। प्राचीनमते व्यभिचारसंशयस्यापि व्याप्तिग्रहप्रतिबन्धकतया व्यभिचारज्ञानपदेन तन्निश्चयमात्रं न ग्रहीतव्यमित्याह—व्यभिचारेति । द्वैविध्यं दर्शयति—

न्यायबोधिनी

स्वार्थानुमानं नाम =न्यायाप्रयोज्यानुमानम् ॥

दीपिका

क्वचित् तर्कात्, क्वचित् स्वतःसिद्ध एव। धूमाग्न्योर्व्याप्तिग्रहे कार्य्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्त्तकः। ननु–सकलवह्निधूमयोरसन्निकर्षात् कथं व्याप्तिग्रह इति चेन्न। वह्नित्वधूमत्वरूपसामान्यप्रत्यासत्त्या सकलवह्निधूमज्ञानसम्भवात्। तस्मादिति। लिङ्गपरामर्शादित्यर्थः॥

विवृतिः

निश्चय इति। व्यभिचारेत्यादिः। एवमग्रेऽपि। तद्विरहः = शङ्कानुत्पादः। क्वचिदिति। संशयकारणसम्वलनदशायामित्यर्थः। तर्कात् = आपत्तिरूपप्रतिबन्धकात्। नन्वेवमनवस्था, तर्कप्रयोजकीभूते आपादकादौ आपाद्यव्यभिचारादिसंशयस्य तर्कप्रतिबन्धकस्य निवृत्त्यर्थं तर्कान्तरस्य, तत्रापि तर्कान्तरस्य–तादृशसंशयनिवृत्त्यर्थमावश्यकत्वादित्यत आह–क्वचित् स्वत इति। तर्काभावभिन्नकारणप्रतियोगिकाभावादित्यर्थः। सिद्ध एव, 'भवत्येव शङ्काविरह' इत्यनुपज्यते। तथा च यत्र तर्कविघटकशङ्कायाः केनचित्प्रतिबन्धकेन निवृत्तिस्तत्र शङ्कानिवृत्त्यर्थं तर्कान्तरानुसरणस्य प्रयोजनाभावान्नानवस्थेति भावः। व्यभिचारशङ्कापनयनद्वारा तर्कस्य व्याप्तिग्रहोपयोगितां दर्शयति–धूमेति। धूमवन्ह्योर्व्याप्तिग्रहस्तस्मिन्नित्यर्थः। प्रयोजकत्वं सप्तम्यर्थः, अन्वयश्चास्य तर्क इत्यनेन। कार्येति। कार्यकारणभावस्य भङ्गः= धूमादौ वह्नयादिजन्यत्वाभावः, तस्य प्रसङ्गः=आपत्तिः, तल्लक्षणः=तत्स्वरूपः। 'धूमो यदि वन्हिव्यभिचारी स्याद्वन्हिजन्यो न स्यात्, इत्याकारकस्तर्क इत्यर्थः। व्यभिचारशङ्कानिवर्तकः = 'धूमो वन्हिव्यभिचारी न वा' इत्याकारकसंशयस्य प्रतिबन्धकः। शङ्कते—नन्विति। पर्वतीयवन्ह्यादेरिन्द्रियासन्निकृष्टत्वादाह—सकलेति। असन्निकर्षात् = इन्द्रियसन्निकर्षाभावात्। कथमिति। कारणं विनेत्यादिः। व्याप्तिग्रहः = धूमसामान्ये वन्हिसामान्यस्य व्याप्तिप्रत्यक्षम्। समाधत्ते—नेति। वन्हित्वेति। वन्हित्वधूम-

यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते—तत्परार्थानुमानम्, यथा–'पर्वतो वह्निमान्' 'धूमवत्त्वात्' 'यो यो धूमवान्स स वह्निमान्—यथा महानसम्' 'तथा चायम्' 'तस्मात्तथेति' । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ॥

दीपिका

परार्थानुमानमाह—यत्त्विति । यच्छब्दस्य 'तत्परार्थानुमानमि'ति 'त'च्छब्देनान्वयः । पञ्चावयववाक्यमुदाहरति—

विवृतिः

त्स्वरूपा या सामान्यलक्षणाप्रत्यासत्तिरलौकिकसन्निकर्षरूपा तयेत्यर्थः । सकलवन्हिधूमज्ञानसम्भवात् =निखिलवन्हिधूमयोरलौकिकप्रत्यक्षसम्भवात्' तथा चेन्द्रियसन्निकर्षविरहेऽपि अलौकिकसन्निकर्षवशादेव धूमसामान्ये वन्हिसामान्यस्य व्याप्तिग्रह इति भावः ।

मूले–यत्त्विति । अस्य पञ्चावयववाक्यमित्यनेन सम्बन्धः, । स्वयं = वादी । धूमात् = धूमरूपहेतुतः । अग्निं = वह्निम् । अनुमाय = निश्चित्य । परेति । परो=मध्यस्थः, तस्य या प्रतिपत्तिः = मानसात्मको लिंगपरामर्शः स एव–अर्थः = प्रयोजनं यस्य तादृशमित्यर्थः । मध्यस्थस्य यो लिंगपरामर्शस्तत्प्रयोजकीभूतमिति तु फलितम् । पञ्चवाक्यं = प्रतिज्ञादिपञ्चवाक्यम् । तत् = तादृशं पञ्चवाक्यम् । परार्थानुमानं = मध्यस्थीयलिंगपरामर्शात्मकं यदनुमानं तत्प्रयोजकम् । अत्र परार्थानुमानशब्दः परार्थानुमानप्रयोजकार्थको बोध्यः । दीपिकायां यत्तदोर्नित्यसम्बन्धमाह–यच्छब्दस्येति । तथा च यत् पञ्चवाक्यं, तदेव परार्थानुमान–शब्देनाऽवगन्तव्यमिति भावः । मूले–अनेनेति । प्रतिज्ञादिपञ्चावयववाक्येनेत्यर्थः । प्रतिपादितात् = मानसपरामर्शविषयीभूतात् धूमादितः । परोऽपि = मध्यस्थोऽपि । अग्निं =

प्रतिज्ञा—हेतूदाहरणोपनयनिगमनानि-पञ्चावयवाः। 'पर्वतो-वह्निमानि'ति-प्रतिज्ञा। 'धूमवत्त्वादि'ति-हेतुः। 'यो यो धूमवान्-स स वह्निमानि'त्युदाहरणम्। 'तथा चाय-मि'त्युपनयः। 'तस्मात्तथे'ति-निगमनम्॥

दीपिका

यथेति। अवयवस्वरूपमाह—प्रतिज्ञेति। उदाहृतवाक्येषु प्रति-ज्ञादिविभागमाह—'पर्वतो वह्निमानिति। 'साध्यवत्तया पक्ष-वचनम्—प्रतिज्ञा, पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं—हेतुः, व्याप्ति-

विवृतिः

वह्निम्। प्रतिपद्यते = निश्चिनोति। दीपिकायां—प्रतिज्ञादिविभागमिति। प्रतिज्ञात्वाद्यवान्तरधर्मेण प्रतिज्ञादिधर्मिणां प्रतिपादनमित्यर्थः। प्रतिज्ञा-लक्षणमाह—साध्यवत्तयेति। साध्यतावच्छेदकमात्रावच्छिन्नप्रकारता-निरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकबोधजनकं वाक्यं = प्रतिज्ञा। वस्तुतः प्रकृतव्याप्यविषयकबोधजनकहेत्ववयवभिन्नवाक्यमेव प्रतिज्ञेत्य-वधेयम्। पञ्चम्यन्तमित्युपलक्षणम्; तथा च प्रकृतपक्षविशेषणतापन्न-साध्यान्वितहेतुज्ञानज्ञाप्यत्वबोधकत्वे सति हेतुतावच्छेदकविशिष्टहेतुविशिष्ट-

न्यायबोधिनी

न्यायप्रयोज्यानुमानं = परार्थानुमानम्। न्यायत्वं = च 'प्रति-ज्ञाद्यवयवपञ्चकसमुदायत्वम्'। अवयवत्वं च = 'प्रतिज्ञाद्य-न्यतमत्वम्''॥

---

न्यायत्वञ्चेति। उचितानुपूर्विकप्रतिज्ञादिपञ्चावयवसमुदायत्वमित्यर्थः॥
अवयवत्वञ्चेति। न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वमित्यर्थः॥

दीपिका

प्रतिपादकं वचनम्—उदाहरणम्, व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनम्—उपनयः, हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनम्—निगमनम्। पक्षज्ञानं प्रतिज्ञाप्रयोजनम्, लिङ्गज्ञानं हेतुप्रयोजनम्, व्याप्तिज्ञानमुदाहरणप्रयोजनम्, पक्षधर्मताज्ञानम् उपनयप्रयोजनम्, अबाधितत्वादिकं निगमनप्रयोजनम्।

विवृतिः

हेतुत्वविषयिताभिन्नविषयिताशून्यबोधजनकवाक्यं = हेतुरित्यर्थः। उदाहरणलक्षणमाह—**व्याप्तीति**। व्याप्तिप्रतिपादकं = प्रकृतसाध्ये प्रकृतहेतुव्यापकत्वप्रतिपादकम्, तथा च प्रकृतहेतुमद्विशेष्यकप्रकृतहेतुव्यापकत्वविशिष्टसाध्यप्रकारकबोधजनकवाक्यमुदाहरणमित्यर्थः। उदाहरण—घटक'यत्' 'तत्'पदन्तु तादृशार्थतात्पर्यग्राहकमित्यवधेयम्। उपनयलक्षणमाह—**व्याप्तीति**। तथा च प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुप्रकारकप्रकृतपक्षविशेष्यकबोधजनकवाक्यमुपनय इत्यर्थः॥ 'तथा चाऽय'मिति वाक्यस्य साध्यव्याप्यहेतुमानयमित्येवमर्थ इति भावः। निगमनलक्षणमाह—**हेत्विति**। साध्यव्याप्यो यो हेतुः तज्ज्ञानजन्यज्ञानविषयीभूतसाध्यवत्तयेत्यर्थः। तथा च निगमनस्थ–'तस्मादि'त्यस्य साध्यव्याप्यहेतुज्ञानजन्यज्ञानविषयत्वार्थकतया 'तथा'इत्यस्य चाऽबाधिताऽसत्प्रतिपक्षितसाध्यपरतया प्रकृतपक्षविशेष्यकसाध्यव्याप्यहेतुज्ञानजन्यज्ञानविषयीभूताऽबाधिताऽसत्प्रतिपक्षितसाध्यप्रकारकबोधजनकवाक्यं निगमनमिति भावः। प्रतिज्ञादिलक्षणे सर्वत्रैव न्यायावयवत्वे सतीति विशेषणं देयम्, अन्यथा उदासीनप्रतिज्ञादिसमानाकारकवाक्येऽतिप्रसङ्गः स्यात्॥ न्यायत्वञ्चोचितानुपूर्वीकप्रतिज्ञादिपञ्चसमुदायत्वम्। तदवयवत्वञ्च = तादृशन्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वरूपमिति संक्षेपः। प्रतिज्ञादीनां प्रयोजनं दर्शयति—**पक्षज्ञानमिति**। पक्षधर्मताज्ञानं = पक्षेहेतोर्वृत्तित्व-

**स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥**

दीपिका

अनुमितिकरणमाह—**स्वार्थेति** । ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेव अनुमितिसम्भवे विशिष्टपरामर्शः किमर्थमङ्गीकर्त्तव्य इति चेन्न । 'वह्निव्याप्यधूमवानयमि'ति शाब्दपरामर्शस्थले परामर्शस्याऽऽवश्यकतया लाघवेन सर्वत्र परामर्शस्यैव

विवृतिः

ज्ञानम् । अबाधितत्वादिकम् = साध्यनिष्ठाऽबाधितत्वादिकम् । आदिपदादसत्प्रतिपक्षितत्वपरिग्रहः ॥ मीमांसकमतं दूषयितुमाशङ्कते—**नन्विति । व्याप्तीति ।** पूर्वानुभूतया व्याप्तेः स्मरणात्मकं 'साध्यव्याप्यो हेतु'रित्याकारकं यज्ज्ञानं यच्च हेतोः पक्षे प्रत्यक्षाद्यात्मकं पक्षधर्मताज्ञानं = 'हेतुमान् पक्ष'इत्याकारकं ज्ञानं–ताभ्यामेवेत्यर्थः । अनुमितिसम्भवे = अनुमित्युत्पादसम्भवे । विशिष्टपरामर्शः = 'साध्यव्याप्यहेतुमान् पक्ष'इत्याकारकः साध्यव्याप्तिविशिष्टस्य हेतोः पक्षे यो वैशिष्ट्यावगाहिनिश्चयः ॥ **किमर्थमिति** । सर्वत्र तादृशज्ञानकल्पनाऽपेक्षया तादृशज्ञानद्वयस्य हेतुत्वे लाघवादिति भावः ॥ नैयायिकः समाधानमाह—**नेति** । इति शाब्दपरामर्शस्थले = इत्याकारकशाब्दबोधात्मकविशिष्टपरामर्शस्थले । परामर्शस्य = नैयायिकमतसिद्ध'साध्यव्याप्तिविशिष्टहेतुमान् पक्ष'इत्याकारकविशिष्टपरामर्शस्य । आवश्यकतया = अवश्यं स्वीकरणीयतया । सर्वत्र = सर्वस्यामनुमितौ । परामर्शस्यैव = विशिष्टपरामर्शस्यैव । एवकारेण तादृशज्ञानद्वयव्यवच्छेदः ॥ **कारणत्वादिति** । तथा च शब्दजन्यशाब्दात्मकविशिष्टपरामर्शस्थले तादृशज्ञानद्वयस्याऽसम्भवेऽपि अनुमित्युत्पादेन व्यभिचारात् विशिष्टपरामर्शस्यैव सर्वत्रानुमितिहेतुत्वं वक्तव्यमित्याशयः ॥ लिङ्गं =

**लिङ्गं-त्रिविधम्-अन्वयव्यतिरेकि, केवलान्वयि, केवल-**

दीपिका

करणत्वात् । लिङ्गं न करणम्, अतीताऽनागतादौ व्यभिचारात् । 'व्यापारवत् कारणं करणमि'ति मते परामर्शद्वारा व्याप्तिज्ञानं कारणम्, तज्जन्यत्वे सति तज्जन्यजनको व्यापारः ॥ अनुमानमुपसंहरति—**तस्मादिति** ॥

लिङ्गं विभजते—**लिङ्गमिति** । अन्वयव्यतिरेकिणं लक्ष-

विवृतिः

ज्ञायमानो हेतुः । न करणं = नानुमितिकरणम् । तत्र हेतुमाह—**अतीतेति** । विनष्टानुत्पन्नलिङ्गादावित्यर्थः । **व्यभिचारादिति** । अतीताऽनागतलिङ्गे व्याप्त्यादिज्ञानदशायां लिङ्गरूपकरणाभावेऽपि अनुमित्युत्पाददर्शनात् भवति व्यभिचारोऽतस्तादृशलिङ्गं नानुमितिकरणमिति भावः । ननु तर्हि नव्यमते किमनुमितिकरणमित्यत आह—**व्यापारेति** । परामर्शद्वारा = परामर्शं जनयित्वा व्याप्तिज्ञानं = साध्यनिरूपितहेतुनिष्ठा या व्याप्तिस्तस्या ज्ञानम् । ननु कोऽसौ करणलक्षणघटकीभूतो व्यापार इत्याकांक्षायामाह—**तदिति** । तत्पदं करणत्वेनाभिमतव्यक्तिपरम् । तथा चोक्तस्थले व्याप्तिज्ञानजन्यत्वस्य व्याप्तिज्ञानजन्यानुमितिजनकत्वस्य च परामर्शे सत्त्वात् परामर्शस्य व्यापारत्वसिद्धौ सामानाधिकरण्यसम्बन्धेन तादृशपरामर्शरूपव्यापारवत्त्वमादाय व्याप्तिज्ञानस्याऽनुमितिकरणत्वमिति भावः । व्याप्तिज्ञानादिरूपकरणस्य व्यापारत्ववारणाय सत्यन्तम् । अनुमित्यादिकार्यस्य व्यापारत्ववारणाय विशेष्यदलमिति ध्येयम् । अनुमानम् = प्राचीनमतसिद्धानुमानम् ॥

**मूलेऽन्वयेनेत्यादि** । अन्वयनिरूपिता या हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यरूपा व्याप्तिर्या च व्यतिरेकनिरूपिता हेतुनिष्ठसाध्याभाव-

व्यतिरेकि, चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वय-व्यतिरेकि, यथा-वह्नौ साध्ये 'धूमवत्त्वम्' । 'यत्र धूमस्तत्राग्निर्यथा महानस'मित्यन्वयव्याप्तिः । 'यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा-ह्रद' इति व्यतिरेकव्याप्तिः ॥

दीपिका

यति—अन्वयेनेति । हेतुसाध्ययोर्व्याप्तिः—अन्वयव्याप्तिः, तद्-भावयोर्व्याप्तिः—व्यतिरेकव्याप्तिः ॥ केवलान्वयिनो लक्षणमाह—

विवृतिः

व्यापकाभावप्रतियोगित्वरूपा व्याप्तिस्तदुभयविशिष्टहेतुत्वमन्वयव्यतिरेकित्व-मित्यर्थः ॥ दृष्टान्तमाह—**यथेति । अन्वयमात्रेति ।** व्यतिरेकव्याप्ति-ज्ञानविशेष्यत्वाभाववत्त्वे सति, हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्य-रूपान्वयव्याप्तिमल्लिंगत्वं केवलान्वयित्वमित्यर्थः ॥ दृष्टान्तमाह— **यथेति ॥ व्यतिरेकमात्रेति ।** पूर्वोक्तान्वयव्याप्तिज्ञानविशेष्यताऽभाववत्त्वे सति साध्याभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमल्लिंगत्वं केवल-व्यतिरेकित्वमित्यर्थः । यत् = जलादिकम् । इतरेभ्यः = पृथिवीतरेभ्यः । न भिद्यते = भेदाभाववत् भवति । न तत् गन्धवत् = तादृशं जलादिकं गन्धाभाववत् भवति ॥ **नचेयमिति ।** इयं = पृथिवी । न च तथा, = न इतरभेदाभावव्यापकगन्धाभाववती अपि तु तादृशगन्धाभावप्रतियोगि-गन्धवत्येवेत्यर्थः । तस्मात् = इतरत्वव्यापकाभावप्रतियोगिगन्धात् । न

न्यायबोधिनी

**अन्वयेनेति ।** व्यापकसामानाधिकरण्यरूपव्याप्तिमानित्यर्थः । **व्यतिरेकेणेति ।** व्यतिरेको नामाभावः । तथा च साध्याभाव-हेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः । इयं च व्याप्तिः 'यत्र यत्र वह्न्य-भावस्तत्र तत्र धूमाभाव' इति । 'यत्र'पदवीप्सया वह्न्यभाववति

अन्वयमात्रव्याप्तिकं-केवलान्वयि, यथा-'घटोऽभिधेयः

दीपिका

अन्वयेति । केवलान्वयिसाध्यकं लिङ्गं—केवलान्वयि, अत्यन्ताभावाऽप्रतियोगित्वं—केवलान्वयित्वम् । केवलान्वयिनमुदाहरति—

विवृतिः

तथा = नेतरत्ववती ॥ दीपिकायां—हेतुसाध्ययोरिति । हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यरूपा व्याप्तिरित्यर्थः ॥ तदभावयोः= हेत्वभावसाध्याभावयोः ॥ व्याप्तिरिति । हेतुनिष्ठसाध्याभावव्यापकाभावप्रतियोगित्वरूपा व्याप्तिरित्यर्थः । केवलान्वयिसाध्यकं = सर्वत्र वर्त्तमानं साध्यं यस्य तादृशं लिंगं = हेतुः ॥ अत्यन्तेति । निरवच्छिन्नवृत्तिमान् योऽत्यन्ताभावस्तदप्रतियोगित्वं केवलान्वयित्वमित्यर्थः । केवलान्वयिनोऽ

न्यायबोधिनी

यावति धूमाभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते। एवं च वह्न्यभावनिष्ठव्याप्तेः स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसंबन्धेन धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन व्यतिरेकित्वेन, धूमव्यापकवह्निसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेनान्वयित्वेन च (धूमवत्त्वं) गीयते। व्यतिरेकपरामर्शस्तु—'वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान्पर्वत' इत्याकारकः॥ केवलान्वयिनो लक्षणमाह—अन्वयेति। केवलान्वयि-

---

स्वाश्रयीभूतेति । स्वं = व्याप्तिः तदाश्रयीभूतो यो वन्ह्यभावस्तद्व्यापकीभूतो योऽभावो धूमाभावस्तत्प्रतियोगित्वेन सम्बन्धेनेत्यर्थः ॥

वन्ह्यभावेति । इदमुपलक्षणं—वन्ह्यभावव्यापकीभूताभावप्रतियोगी धूम इत्याकारकोऽपि परामर्शो ग्राह्यः ॥

प्रमेयत्वात्, पटवत् । अत्र प्रमेयत्वाऽभिधेयत्वयोर्व्यतिरेक-व्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च ॥

दीपिका

घटोऽभिधेयः प्रमेयत्वादिति । ईश्वरप्रमाविषयत्वं सर्वपदाभि-

विवृतिः

भावाप्रसिद्धिं दर्शयति— ईश्वरेति । ईश्वरीययथार्थज्ञानविषयत्वमित्यर्थः । सर्वपदाभिधेयत्वं = शब्दशक्यत्वम् । सर्वत्र = सर्वेषु पदार्थेषु ॥

न्यायबोधिनी

साध्यकत्वं-हेतोः केवलान्वयित्वम्, साध्ये-केवलान्वयित्वं = चाऽत्यन्ताभावाप्रतियोगित्वम् । तथाच अभावाप्रतियोगिसाध्यकत्वं केवलान्वयिहेतोर्लक्षणम् । एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि संगच्छते । साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावादन्वयमात्रव्याप्तिकं केवलान्वयीति मूलकारोक्तं लक्षणमुपपन्नम् । नचात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वमाकाशाभावे संयोगाभावे चाव्याप्तमिति वाच्यम् । स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगि-

अत्यन्ताभावेति । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं, तेन न गगनाभावेऽव्याप्तिः ॥

हेतोर्व्यतिरेकित्वेऽपीति । हेतोरभावप्रतियोगित्वेऽपीत्यर्थः ॥

स्वविरोधीति । स्वाधिकरणावृत्तिर्यो वृत्तिमानभावस्तत्प्रतियोगि यत् यत् तदन्यत्वं केवलान्वयित्वमित्यर्थः । स्वं-अत्यन्ताभावप्रतियोगित्वेनाभिमतो घटादिः, नैवं विधं स्वं, संयोगाभावाभावप्रतियोगी संयोगाभावस्तदधिकरणे द्रव्ये संयोगाभावाभावस्य वर्त्तमानत्वादिति न संयोगाभावेऽव्याप्तिः ॥ वस्तुतः—स्वानधिकरणवृत्त्यभावप्रतियोगि यत् यत् तदन्यत्वे सति वृत्तिमत्त्वं केवलान्वयित्वं, तेन न संयोगे गगने चातिव्याप्तिः, स्व-पदं प्रतियोगिपरमिति ध्येयम् ।

व्यतिरेकमात्रव्याप्तिकं-केवलव्यतिरेकि, 'यथा-'पृथिवी-

दीपिका

धेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः ।। केवलव्यतिरेकिणो लक्षणमाह-व्यतिरेकेति । केवलव्यतिरेकिणमुदाहरति—पृथिवीति ।

विवृतिः

व्यतिरेकेति । तयोः कुत्रापि नाभावः सम्भवतीति भावः । पक्षत्वादिति । तथा च साध्यनिश्चयस्यासम्भवादन्वयव्याप्तिर्न सम्भवतीति

न्यायबोधिनी

त्वस्यैव तदर्थत्वात् । एकजातीयसंबन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वमिति-नव्याः ।।

केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् । यथा पृथिवीति । अत्र पृथिवीत्वावच्छिन्नं—पक्षः, पृथिवीतरजलाद्यष्टभेदः—साध्यः, गन्धवत्त्वं—हेतुः, अत्र 'यद्गन्धवत्तदितरभेदवदि'त्यन्वयदृष्टान्ताभावात् 'गन्धव्यापकेतरभेदसामानाधिकरण्य'रूपान्वयव्याप्तिग्रहासंभवात् । किंतु 'यत्र यत्र पृथिवीतर-

एकजातीयेति । केवलान्वयिताघटकसम्बन्धेन सर्वत्र वर्तमानत्वं केवलान्वयित्वमित्यर्थः । तथा च केवलान्वयिताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकयत्किञ्चिदधिकरणवृत्तितावच्छेदकधर्मवत्त्वं केवलान्वयित्वमिति भावः ।

अन्वयेति । हेतुव्यापकसाध्यसामानाधिकरण्याद्यभाववत्त्वे सति, साध्याभावव्यापकाभावप्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वम्, केवलव्यतिरेकित्वमित्यर्थः ।

अन्वयदृष्टान्ताभावादिति । पृथिवीमात्रस्य पक्षतयैवान्वयदृष्टान्तविरह इत्याशयः ।

दीपिका

ननु-इतरभेदः प्रसिद्धो, न वा ? आद्ये-यत्र प्रसिद्धस्तत्र हेतुसत्त्वे-अन्वयित्वम्, असत्त्वे-असाधारण्यम् । द्वितीये-साध्यज्ञानाभावात्

विवृतिः

हृदयम् ॥ केवलव्यतिरेकिस्थले मूलोक्तं दृष्टान्ताभावमाक्षिपति—नन्विति । इतरभेदः = पृथिवीतरभेदः । **प्रसिद्ध इति** । किञ्चिद्विशेष्यकनिश्चयविषयीभूतो न वेत्यर्थः । आद्ये = पृथिवीतरभेदस्य किञ्चिद्विशेष्यकनिश्चयविषयीभूतत्वस्वीकारपक्षे । यत्र = यस्मिन् विशेष्ये । प्रसिद्धः = निश्चितः । तत्र = तस्मिन् विशेष्ये । हेतुसत्त्वे = गन्धवत्त्वरूपहेतोर्विद्यमानत्वे ॥ **अन्वयित्वमिति** । हेतुनिष्ठसाध्याधिकरणवृत्तित्वरूपान्वयसहचारनिश्चयजन्यज्ञानविषयीभूताऽन्वयव्याप्तिमत्त्वेन हेतोरन्वय्यनुमानत्वं स्यादित्यर्थः । असत्त्वे = इतरभेदरूपसाध्यस्य निश्चयविषयीभूते पदार्थे हेतोरवर्तमानत्वे ॥ **असाधारण्यमिति** । निश्चितेतरभेदरूपसाध्यवत्यवर्त्तमानतया हेतोरसाधारणत्वं स्यादित्यर्थः ॥ द्वितीये = पृथिवीतरभेदरूपसाध्यस्य किञ्चिद्विशेष्यकनिश्चयविषयत्वाभावस्वीकारपक्षे । साध्यज्ञानाभावात् = पृथिवीतरभेदरूपसाध्यस्य ज्ञाना-

न्यायबोधिनी

भेदाभावस्तत्र तत्र गन्धाभावो–यथा जलादिकमिति' व्यतिरेकदृष्टान्ते जलादावितरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते, इममेवार्थं मनसि निधाय—"यदितरेभ्यो न भिद्यते न तद्गन्धवत्–यथा जलमिति" ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान् ।

---

पृथिवीतरभेदाभाव इति । पृथिवीतरत्वमित्यर्थः । तथा चेतरत्वव्यापकगन्धाभावप्रतियोगितावच्छेदकगन्धत्ववत्त्वेन गन्धरूपहेतोः केवलव्यतिरेकित्वमितिभावः ।

दीपिका

कथं तद्विशिष्टानुमितिः । विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात्, प्रतियोगिज्ञानाभावाद् व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेन्न । जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेल-

विवृतिः

भावात् ॥ कथमिति । कारणाभावेनेत्यादिः । तद्विशिष्टानुमितिः = पृथिवीतरभेदरूपसाध्यविशिष्टानुमितिः 'पृथिवी पृथिवीतरभेदवती'त्याकारकानुमितिरिति यावत् । विशेषणज्ञानाभावे = पक्षीभूतायां पृथिव्यां विशेषणीभूतो यः पृथिवीतरभेदः तज्ज्ञानाभावे । विशिष्टज्ञानानुदयात् = 'पृथिवी-पृथिवीतरभेदवती'त्याकारकविशिष्टज्ञानोत्पादाऽसम्भवात् । तद्विशिष्टज्ञानं प्रति तज्ज्ञानस्य हेतुत्वादित्याशयः । विशेषणज्ञानस्य विशिष्टबुद्धौ सर्वत्र हेतुत्वे मानाभावादाह—प्रतियोगीति । पृथिवीतरभेदाभावस्य प्रतियोगिनः पृथिवीतरभेदस्य ज्ञानाभावादित्यर्थः ॥ व्यतिरेकेति । 'पृथिवीतरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवत्त्वमि'त्याकारकपृथिवीतरभेदाभावघटिताया व्यतिरेकव्याप्तेर्ज्ञानमपीत्यर्थः । अपिना साध्यज्ञानविरहेणान्वयव्याप्तिज्ञानाभावः सूचितः ॥ न स्यादिति ॥ पृथिवीतरभेदाभावघटितव्यतिरेकव्याप्तिज्ञानस्याभावबुद्धित्वेन तादृशबुद्धौ प्रतियोगिज्ञानस्यावश्यं कारणतया पूर्वं पृथिवीतरभेदरूपप्रतियोगिज्ञानस्यासत्त्वे तादृशव्यतिरेकव्याप्तिज्ञानमेव न सम्भवतीति हृदयम् ॥ समाधानमाह—नेति । जलादीति । 'जलं न-तेजो ने'त्याकारकाणां, 'गुणो न-कर्म ने'त्याकारकाणाञ्च त्रयोदशानां भेदानामित्यर्थः ॥ त्रयोदशसु= जलादिषु गुणकर्मसु च मध्ये ।

न्यायबोधिनी

एवंप्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरं 'इतरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवी'त्याकारकव्यतिरेकपरामर्शात्—'पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका'—

दीपिका

नम् पृथिव्यां साध्यते, त्रयोदशत्वावच्छिन्नसाध्यस्यैकाधिकरणवृत्तित्वाभावात् नाऽन्वयित्वाऽसाधारण्ये। प्रत्येकाधिकरणप्रसिद्ध्या साध्य-

विवृतिः

प्रत्येकंप्रसिद्धानां = 'जलं ने'त्यादिभेदस्य तेजसि, 'तेजो ने'त्यादिभेदस्य च जले, इत्यादिरीत्या प्रत्येकं निश्चितानां। मेलनं = समुदायः, जलादीनां तावद्भेदकूट इति यावत्। **पृथिव्यामिति**। पक्षीभूतायामित्यादिः॥ **साध्यत इति**। तथा च 'जलं न तेजो ने'त्यादिभेदानां प्रत्येकं जलादौ तेजसि च प्रसिद्धानां समुदायः—पक्षीभूतायां पृथिव्यां साधनीय इति भावः। नन्वेवं रीत्या साध्यनिश्चयोपगमे तत्र हेतुसत्त्वे कथं तस्य नान्वयित्वं, असत्त्वे च कथं वा नासाधारण्यमित्यत आह—**त्रयोदशत्वेति**। पर्याप्तिसम्बन्धेन त्रयोदशत्वाधिकरणीभूतस्य जलादिभेदरूपसाध्यस्ये-त्यर्थः॥ एकाधिकरणवृत्तित्वाभावात् = एकस्मिन्नधिकरणे कुत्रापि वर्तमानताया निश्चेतुमशक्यत्वात्। पृथिवीमात्रस्य पक्षतया तदतिरिक्ते चाधिकरणे तादृशत्रयोदशभेदानामविद्यमानतया निश्चय एव न सम्भवतीति **हृदयम्**। साध्यसामानाधिकरण्यरूपसहचारनिश्चयाभावेनाऽन्वयव्याप्तेः ज्ञानमेव न सम्भवति, तादृशभेदनिश्चयाभावे च निश्चितसाध्यवतोऽप्रसिद्ध्या न निश्चितसाध्यवद्व्यावृत्तत्वं निरुक्तगन्धवत्त्वहेतोरित्याशयेनाऽऽह—**नाऽन्वयित्वाऽसाधारण्ये इति**। निरुक्तगन्धवत्त्वहेतोरित्यादिः। सम्भवत इति शेषः। **प्रत्येकेति**। प्रत्येकस्य जलादिभेदस्य च यदधिकरणं = तेजःप्रभृति तस्य प्रसिद्ध्या निश्चयसम्भवेनेत्यर्थः। **तद्विशिष्टानुमितिरिति**। तादृशभेदविशिष्टानुमितिरित्यर्थः। तथा च स्वरूपसम्बन्धेन त्रयोदशत्ववतः प्रत्येकजलादिभेदरूपसाध्यस्य प्रत्येकं जलादौ निश्चयरूपविशेषणज्ञानसम्भवात् 'तादृशत्रयोदशभेदवती पृथवी'त्याकारकसाध्यविशिष्टानुमितिरितिभावः॥ साध्यरूपप्रतियोगिज्ञानसम्भवाच्च न साध्याभावघटितव्यति-

इतरेभ्यो भिद्यते-गन्धवत्त्वात्', यदितरेभ्यो न भिद्यते न तद्गन्धवत्—यथा जलम्, न चेयं तथा, तस्मान्न तथेति, अत्र यद्गन्धवत् तदितरभिन्नमि'त्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् ।

दीपिका

विशिष्टानुमितिः । साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति व्यतिरेकव्याप्तिनिरूपणं च-यदितरेति ।

विवृतिः

रेकव्याप्तिज्ञानस्याप्यसम्भव इत्यवधेयम् ॥ वस्तुतः—पक्षैकदेशे घटादौ साध्यनिश्चयमङ्गीकृत्य पृथिवीत्वावच्छेदेन तदितरभेदत्वावच्छिन्नसिद्धौ न किमपि बाधकमिति ध्येयम् । व्यतिरेकव्याप्तिं प्रदर्शयति साध्येति । इति= इत्याकारकम् । व्यतिरेकव्याप्तिनिरूपणं = व्यतिरेकव्याप्तिकथनम् ॥

न्यायबोधिनी

'पृथिवी-इतरभेदवती'त्याकारकानुमितिर्जायत इति तत्त्वम् । यथाश्रुतमूलार्थस्तु—यथा जलमिति । जलं—इतरभेदाभाववत्, इतरभेदाभावव्यापकगन्धाभाववच्च । इत्येवंप्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यत इत्यर्थः । न चेयं तथा । इयं= पृथिवी, तथा= इतरभेदाभावव्यापकगन्धाभाववती,—न, किंतु

---

पृथिवीतरभेदवतीति । वस्तुतः-पृथिव्यामितरभेद-इत्याकारिकैवानुमितिः स्वीकरणीया, साध्यज्ञानस्य पूर्वमसत्त्वात्, पक्षविशेष्यकसाध्याविधेयकानुमितिर्न सम्भवत्येवेति ध्येयम् ।

इतरभेदाभाववदिति । पृथिवीतरत्ववदित्यर्थः । इतरेति । पृथिवीतरभेदाभावव्यापको यो गन्धाभावस्तद्वदित्यर्थः ।

संदिग्धसाध्यवान्-पक्षः, यथा-धूमवत्त्वे हेतौ पर्वतः ॥

दीपिका

पक्षलक्षणमाह-संदिग्धेति। ननु-श्रवणानन्तरभाविमननस्थले

विवृतिः

मूले सन्दिग्धेति। संदेहविषयीभूतसाध्यवान् पक्ष इत्यर्थः। प्रमानुमितेरलक्ष्यतामतेनेदम् ॥ दृष्टान्तमाह—यथेति। वन्हिसाध्यक-धूमवत्त्वहेतौ पर्वतः पक्ष इत्यनुषज्यते। निश्चितेति। निश्चयविषयीभूतसाध्यवान् सपक्ष इत्यर्थः। ज्ञानीयसाध्यप्रकारताभिन्नप्रकारत्वाऽनिरूपितविशेष्यतावान् सपक्ष इति तु फलितार्थः ॥ दृष्टान्तमाह—यथेति। तत्रैव = वन्हिसाध्यकधूमवत्त्वहेताविय्यत्रैव। महानसं = सपक्ष इत्यनुषज्यते। निश्चितसाध्याभाववान् = निश्चयविषयीभूतसाध्याभाववान्—ज्ञानीयसाध्याभावप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यतावान् इति यावत्। तत्रैव = वन्हिसाध्यकधूमवत्त्वहेताविय्यत्रैव। महाह्रदः = तादृशविपक्ष इत्यनुषज्यते। दीपिकायां शङ्कते—नन्विति। श्रवणानन्तरम् = शाब्दबोधानन्तरम्।

न्यायबोधिनी

तदभावात्मक-गन्धवती। तस्मान्न तथेति। तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन तस्मादिति पञ्चम्यन्तात् गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः। तथा = इतरभेदाभाववती, 'न' इत्यस्याभावः, तथाच इतरभेदाभावाभाववती इतरभेदवतीत्यर्थः ॥

पक्षलक्षणमाह—संदिग्धेति। साध्यप्रकारकसंदेहविशेष्यत्वं-पक्षत्वम्। इदं च लक्षणमनुमितेः पूर्वं साध्यसंदेहे नियमेन

'न' इत्यस्याभाव इति—न-इत्यस्याभावोऽर्थ इत्यर्थः। इतरभेदाभावाभाववतीत्यस्यार्थमाह—इतरभेदवतीत्यर्थं इति।

साध्यप्रकारकेति। साध्याविशेष्यकसन्देहप्रकारत्वमपि पक्षत्वं बोध्यम्।

दीपिका

अव्याप्तिः, तत्र वेदवाक्यैरात्मनो निश्चितत्वेन सन्देहाभावात्, किञ्च-प्रत्यक्षेऽपि वह्नौ यत्रेच्छयाऽनुमितिः तत्राव्याप्तिरिति चेन्न ।

विवृतिः

भाविमननस्थले = भविष्यदात्मानुमितिस्थले, क्षित्यङ्कुरादावितरबाधाधीनेश्वरकर्तृकत्वानुमितिस्थले इति यावत् ॥ अव्याप्तिमुपपादयति—**तत्रेति** । अनुमित्युद्देश्यीभूते क्षित्यङ्कुरादावित्यर्थः । वेदवाक्यैः = श्रुत्यादिभिः । आत्मनो निश्चितत्वेन = ईश्वरकर्तृकत्वस्य निश्चितत्वेन ॥ **सन्देहाभावादिति** । तथा च क्षित्यङ्कुरादौ ईश्वरकर्तृकत्वस्य श्रुत्यादिना निश्चिततया सन्देहविषयत्वविशिष्टतादृशसाध्यविरहेण सन्दिग्धसाध्यवत्त्वरूपपक्षतालक्षणं तत्राव्याप्तमिति भावः ॥ अव्याप्त्यन्तरमप्याह—**किञ्चेति** । प्रत्यक्षेऽपि = प्रत्यक्षात्मकनिश्चयविषयीभूते सत्यपि । वह्नौ = साध्ये । यत्र = पर्वतादौ । इच्छया = पर्वते वह्न्यनुमितिर्जायतामित्याकारकेच्छया । **अनुमितिरिति** । प्रत्यक्षविषयीभूतवह्निरूपसाध्यस्यानुमितिरित्यर्थः । तत्र = पर्वते । **अव्याप्तिरिति** । वह्नेः संशयाभावेन सन्दिग्धसाध्यवत्त्वस्य पर्वतेऽसत्त्वादव्याप्तिरित्यर्थः । उक्तेति । पूर्वोक्तो यः सिषाधयिषाविरहविशिष्टसाध्यनिश्चयाभावस्तदाश्रयत्वस्यैव पक्षलक्षणतया विवक्षितत्वादित्यर्थः । तथा च वेदवाक्यैरात्मावगमेऽपि अनुमित्सयैवानुमितेरुत्पादात् सर्वत्रैव निरुक्तपक्षताश्रयत्वमक्षतमेवेति भावः । सपक्षविपक्षलक्षणे प्रागेवास्माभिरभिहते ॥

न्यायबोधिनी

जायत इत्यभिप्रायेण प्राचीनैः कृतम् । गगनविशेष्यकमेघप्रकारकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन 'गगनं मेघवदि'त्याकारिकाया गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया अनुमितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनै-

निश्चितसाध्यवान्-सपक्षः, यथा-तत्रैव महानसम् ।

निश्चितसाध्याभाववान् विपक्षः, यथा-तत्रैव महाह्रदः ॥

दीपिका

उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात् । सपक्षलक्षणमाह-निश्चितेति । विपक्षलक्षणमाह-निश्चितेति ।

एवं सद्धेतून् निरूप्य असद्धेतून् निरूपयितुं विभजते-

विवृतिः

सद्धेतून् = व्याप्तिपक्षधर्मताविशिष्टदुष्टहेतूनित्यर्थः । निरूप्य = निरूपणानन्तरम् । असद्धेतून् = व्याप्तिपक्षधर्मताविरहविशिष्टदुष्टहेतून् । निरूपयितुं = ज्ञापयितुम् । विभजत इति । हेत्वाभासत्वावान्तरधर्मेण

न्यायबोधिनी

'रनुमित्युद्देश्यत्वं—पक्षत्वमिति स्थिरीकृतम् ॥

सपक्षलक्षणमाह—निश्चितेति । साध्यप्रकारकनिश्चय-विशेष्यत्वं—सपक्षत्वम् । निश्चयश्च—'महानसं वह्निमदि'त्याकारकः ।

विपक्षलक्षणमाह—निश्चितसाध्याभावेति । साध्याभाव-प्रकारकनिश्चयविशेष्यत्वं—विपक्षत्वम् । निश्चयश्च—'ह्रदो वह्न्यभाववानि'त्याकारकः ।

---

अनुमित्युद्देश्यत्वमिति । सिषाधयिषाविरहविशिष्टायाः सिद्धेरभाववत्त्वं पक्षत्वमित्यर्थः ॥

साध्यप्रकारकेति । साध्यविशेष्यताकनिश्चयप्रकारत्वमपि सपक्षत्वं बोध्यम् ॥

महानसमिति । वह्निर्महानसे इत्याकारकोऽपि निश्चयो ग्राह्यः ॥

साध्याभावेति । साध्याभावविशेष्यताकनिश्चयप्रकारत्वमपि विपक्षत्व-मूहनीयम् ॥

सव्यभिचार-विरुद्ध-सत्प्रतिपक्षा-ऽसिद्ध-बाधिताः पञ्च-हेत्वाभासाः ॥

दीपिका

सव्यभिचारेति । 'अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वम्'

विवृतिः

धर्मिणं प्रतिपादयतीत्यर्थः । विभागोपयोगिदोषघटितदुष्टसामान्यलक्षणं दोषलक्षणं विना न सम्भवतीति प्रथमतो दोषलक्षणमाह-अनुमितीति। 'साध्यव्याप्यहेतुमान् साध्यवांश्च पक्ष' इत्याकारिका याऽनुमितिस्तत्प्रतिबन्धकीभूतं यत् यथार्थज्ञानं=निश्चयस्तद्विषयत्वमित्यर्थः । ह्रदो वह्निमान् धूमादित्यत्र 'वह्न्यभाववद्ध्रदो' दोषः, तद्विषयकयथार्थज्ञानस्य 'ह्रदो वह्निमान् वह्निव्याप्यधूमवानि'त्यनुमितौ प्रतिबन्धकतया तद्विषयत्वस्य तत्र सत्त्वात् । एवं 'पर्वतो-धूमवान्-वह्ने'रित्यत्र धूमाभाववद्वृत्तिवह्निरेव दोषः, तद्विषयकयथार्थज्ञानस्य 'पर्वतो धूमवान् धूमव्याप्यवह्निमांश्चे'त्याकारकानुमितिप्रतिबन्धकत्वात् । एवमनयैव रीत्या अन्येऽपि स्वरूपासिद्ध्यादयो-दोषाः स्वयमूहनीयाः। 'पर्वतो-वह्निमान्-धूमादि'त्यत्र वह्न्यभाववत्पर्वतविषयकभ्रमविषये तादृशपर्वतेऽतिव्याप्तिवारणाय-यथार्थ-पदम् । निरुक्तदोषवत्त्वमेव दुष्टत्वम् । दोषवत्त्वञ्च-स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन । स्वं-वह्न्यभाववद्ध्रदादिरूपो दोषः, इत्यलं पल्लवितेन ॥

न्यायबोधिनी

एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति-सव्यभिचारेति । हेतुवदाभासन्त इति-हेत्वाभासाः=दुष्टहेतव इत्यर्थः । दोषाश्च-व्यभिचार-विरोध-सत्प्रतिपक्षा-ऽसिद्धि-बाधाः । एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः । 'यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतर-

---

यद्विषयकत्वेनेति । तथा च यादृशविशिष्टविषयतासामान्यमनुमिति-

सव्यभिचारोऽनैकान्तिकः, स त्रिविधः—साधारणा-ऽसाधारणाऽनुपसंहारि-भेदात् । तत्र 'साध्याभाववद्वृत्तिः' साधारणोऽनैकान्तिकः, यथा—'पर्वतो—वह्निमान—प्रमेयत्वा-दिति । प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् ॥

दीपिका

—हेत्वाभासत्वम् । सव्यभिचारं विभजते-स त्रिविध इति ।

न्यायबोधिनी

प्रतिबन्धकत्वं तत्त्वं'—दोषसामान्यस्य लक्षणम् । हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा । अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपण-मित्यर्थः । 'पर्वतो—वह्निमान्,—प्रमेयत्वादि'त्यत्र प्रमेयत्वहेतौ 'वह्न्यभाववद्वृत्तित्व'रूपव्यभिचारे ज्ञाते 'वह्न्यभाववदवृत्तित्व'रूप-व्याप्तिज्ञानप्रतिबन्धः फलम् ॥

---

तत्करणान्यतरानिष्ठप्रातिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तादृशाविशिष्टत्वं हेत्वाभासत्वं, वह्न्यभावविशिष्टह्रदविषयतासामान्यस्य, धूमाभाववद्वृत्तिवह्नि-विषयतासामान्यस्य, च प्रकृतानुमिति–तत्करणान्यतरप्रतिबन्धकतावच्छेदक-तया तत्र तत्र लक्षणसमन्वय इति भावः ॥

दुष्टहेतुनिरूपणमिति । स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवन्तो दुष्टास्तेषां निरूपणं = ज्ञानानुकूलव्यापार इत्यर्थः ॥ स्वं-दोषत्वे-नाभिमतम् ॥

व्यभिचारे ज्ञाते इति । व्यभिचारज्ञानदशायामित्यर्थः ॥

वह्न्यभावेति । निरुक्तव्याप्तिज्ञानानुत्पाद एव फलमित्यर्थः ॥ एवमग्रेऽपि ॥

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः, यथा—'शब्दो-नित्यः—शब्दत्वादिति । शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति ॥

दीपिका

साधारणं लक्षयति-तत्रेति । उदाहरति-यथेति । असाधारणं

विवृतिः

मूलेऽनैकन्तिक इति । न एकान्ततः साध्यसाधकोऽनैकान्तिकः, साध्यव्याप्तिग्रहविरोधिरूपवानित्यर्थः । साध्याभाववदित्यादि । साध्यवदन्यवृत्तिरपि साधारणो बोध्यः । अत्र च येन सम्बन्धेन साध्यत्वं तेन सम्बन्धेन साध्याऽभावस्य, साध्यवत्ताबुद्धिविरोधितावच्छेदकसम्बन्धेन यदधिकरणं तद्वृत्तित्वं येन सम्बन्धेन हेतुस्तेन सम्बन्धेन ग्राह्यम् । तेन समवायेन वह्न्यभाववति पर्वतादौ संयोगेन,संयोगेन वह्न्यभाववति च धूमावयवादौ समवायादिना धूमस्य वृत्तावपि न क्षतिः । न वा कालिकेन वह्न्यभावस्याधिकरणे पर्वतादौ धूमस्य संयोगेन सत्त्वेऽप्यतिव्याप्तिः ॥ सपक्षेति । निश्चितसाध्यवद्वृत्तित्वाभाववान् यः निश्चितसाध्याभाववद्वृत्तित्वाभाववान् स इत्यर्थः । पक्षेति । पक्षेतरनिरूपितवृत्तित्वाभाववान् सन् पक्षनिरूपित-

न्यायबोधिनी

असाधारण इति । सर्वसपक्षव्यावृत्तत्वं = निश्चितसाध्यवदवृत्तित्वम् । साध्यवदवृत्तित्वं च = साध्यासामानाधिकरण्यम् । हेतौ साध्यासामानाधिकरण्ये निश्चिते 'साध्यसामानाधिकरण्य'रूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

---

निश्चितेति । साध्यनिश्चयविषयीभूतधर्मिनिरूपितवृत्तित्वाभाववत्त्वमित्यर्थः ॥

साध्यसामानाधिकरण्येति । साध्याधिकरणवृत्तित्वघटितव्याप्तिज्ञानानुत्पादः फलमित्यर्थः ॥

अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी, यथा-'सर्वम्-अनित्यं-प्रमेयत्वादि'ति । अत्र सर्वस्यापि पक्षत्वात्-दृष्टान्तो नास्ति ॥

साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा-'शब्दो-नित्यः--

दीपिका

लक्षयति-सर्वेति । अनुपसंहारिणो लक्षणमाह-अन्वयेति ।

विरुद्धं लक्षयति-साध्येति ।

विवृतिः

वृत्तितावानित्यर्थः। सम्बन्धादिनिवेशः पूर्ववत्। अन्वयेति। अन्वयदृष्टान्तशून्यः सन् व्यतिरेकदृष्टान्तशून्यो यो हेतुः सोऽनुपसंहारीत्यर्थः ॥ पक्षत्वात् = सन्दिग्धसाध्यवत्त्वात्। तथा च कुत्रापि प्रमेयत्वानित्यत्वयोरनिश्चयादन्वयदृष्टान्तविरहः, अनित्यत्वाभावप्रमेयत्वाऽभावस्याप्यनिश्चयात् व्यतिरेकदृष्टान्तविरह इतिभावः। साध्याभावेति। साध्याभावनिरूपितव्याप्तिमान् साध्यव्यापकीभूताभावप्रतियोगिहेतुर्विरुद्ध इत्यर्थः। नित्य-

न्यायबोधिनी

अनुपसंहारिणं लक्षयति—अन्वयेति । उभयविधदृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः । सर्वस्यैव पक्षत्वात्पक्षातिरिक्ताप्रसिद्धेरिति भावः ॥

विरुद्धं लक्षयति—साध्याभावव्याप्त इति ॥ साध्याभाव-

---

दृष्टान्तस्य व्याप्तिज्ञानप्रयोजकत्वमभिप्रेत्याह—उभयविधेति ।

पक्षातिरिक्तेति । पक्षातिरिक्तनिश्चितसाध्यवत इत्यर्थः ॥

विरुद्धलक्षणमाह—साध्येति । यत्र यत्र साध्यं तत्र तत्र वर्तमानो योऽभावस्तत्प्रतियोगित्वमित्यर्थः ॥

कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥

साध्याभावसाधकं हेत्वन्तरं यस्य स—सत्प्रतिपक्षः,

दीपिका

सत्प्रतिपक्षं लक्षयति-यस्येति ॥

विवृतिः

त्वाभावेन = नित्यत्वरूपसाध्याभावेन अनित्यत्वेन । व्याप्तमिति । नित्यत्वव्यापकीभूतो यः कृतकत्वाभावस्तत्प्रतियोगि-कृतकत्वमित्यर्थः । यस्येत्यादि । यस्य = परामर्शविषयीभूतस्य हेतोः साध्याभावसाधकं = साध्याभावानुमितिजनकपरामर्शविषयीभूतम् हेत्वन्तरम् = प्रकृतसाध्यानुमापक-हेतुभिन्नो हेतुः । विद्यते = वर्तते सः = प्रकृतपरामर्शविषयीभूतो हेतुः सत्प्रतिपक्षः=सत्प्रतिपक्षित-इत्यर्थः । यथेति । तथा च 'नित्यत्वव्याप्य-श्रावणत्ववान्-शब्द' इत्याकारकपरामर्शविषयीभूतस्य श्रावणत्वस्य, श्रावणत्वभिन्नो योऽनित्यत्वरूपनित्यत्वाभावव्याप्यकार्यत्ववान् शब्द इत्याकारकपरा-

न्यायबोधिनी

व्याप्तिः = साध्याभावनिरूपितव्यतिरेकव्याप्तिः, = साध्यव्यापकीभूताभावप्रतियोगित्वम् । तथाच 'पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् । एवं सत्प्रतिपक्षेऽपि । विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः । सत्प्रतिपक्षे द्वौ हेतू, विरुद्ध एको हेतुरिति यावत् । साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि ॥

---

पक्षविशेष्यकेति । तथा च 'जलं—वह्निमत्,—जलत्वा'दित्यत्र वह्निव्याप-

यथा—'शब्दो-नित्यः—श्रावणत्वात्, शब्दत्ववत् । शब्दोऽनित्यः—कार्यत्वात्, घटवत् ।

असिद्धस्त्रिविधः—आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्चेति ॥

दीपिका

असिद्धं विभजते-असिद्ध इति ॥ आश्रयासिद्धमुदाहरति

विवृतिः

मर्शविषयीभूतः कार्यत्वरूपो हेतुस्तस्य विद्यमानत्वात् श्रावणत्वं सत्प्रतिपक्षितमिति भावः । असिद्धित्वम् = आश्रयासिद्ध्याद्यन्यतमत्वं । आश्रयेति । आश्रयासिद्धिः-पक्षादौ पक्षतावच्छेदकाद्यभावस्तद्वान् आश्रयासिद्धो हेतुरित्यर्थः। गगनारविन्दम्=गगनवृत्तितावत् कमलम् । अत्रारविन्दे गगनवृत्तित्वाभाववत्त्वमाश्रयासिद्धिस्तद्वत्त्वादरविन्दत्वरूपो हेतुराश्रयासिद्धः । अत एवोक्तं-स च नास्त्येवेति। गगनवृत्तितावत्त्वेनारविन्दं नास्त्येवेत्यर्थः॥ स्वरूपेति । पक्षे हेत्वभावः स्वरूपासिद्धिस्तद्वान् हेतुः स्वरूपासिद्धः । अत्रेति । शब्दस्वरूपे पक्षे इत्यर्थः । चाक्षुषत्वं = चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वम् । तेनालौकिकचाक्षुषत्वस्य शब्दे सत्त्वेऽपि न क्षतिः ॥ श्रावणत्वादिति । श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वादित्यर्थः । तथा च यतः शब्दः श्रावण अत एव न चाक्षुष इति भावः । निरुक्तमूलदीपिका तु सुस्पष्टा,

---

कीभूताऽभावप्रतियोगिजलत्ववज्जलमित्याकारकज्ञानात्—'जलं-वह्निमदि'त्यनु—मित्यनुत्पाद इति भावः ॥ विरुद्धहेतोरेकत्वेन साध्याभावसाधकत्वं, सत्प्रतिपक्षहेत्वोर्द्वित्वेन साध्याभावसाधकत्वमित्याशयः ॥ असामर्थ्यसूचनं = साध्यासाधकत्वसूचनम् ।।

आश्रयासिद्धो यथा—'गगनारविन्दं-सुरभि,-अरविन्दत्वात्, सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः, स च नास्त्येव ॥

स्वरूपासिद्धो यथा-'शब्दो-गुणश्चाक्षुषत्वात्, रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ॥

सोपाधिको हेतुर्व्याप्यत्वासिद्धः । साध्यव्यापकत्वे

दीपिका

-गगनेति । स्वरूपासिद्धमुदाहरति-शब्द इति ॥

व्याप्यत्वासिद्धस्य लक्षणमाह-सोपाधिक इति । उपाधे-

विवृतिः

विस्तृतिभयान्नेह वितन्यते ॥ मूले सोपाधिक इति । उपाधिना सह-

न्यायबोधिनी

आश्रयासिद्ध इति । आश्रयासिद्धिर्नाम = पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिः । यथेति । अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम् ।

स्वरूपासिद्ध इति । स्वरूपासिद्धिर्नाम—पक्षे हेत्वभावः । तथाच हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शाऽनुपपत्त्या परामर्शे प्रतिबन्धः फलम् ।

व्याप्यत्वासिद्ध इति । प्रकृते धूमव्यापकत्वमार्द्रेन्धन-

---

अरविन्द इति । गगननिरूपितवृत्तित्वाभाववत्त्वस्यारविन्दे निश्चये-इत्याशयः।

हेत्वभावेति । हेत्वभावः पक्षे, हेत्वभाववान् पक्षः, इत्याकारकनिश्चयादित्यर्थः, फलमिति । तत्प्रकारकबुद्धौ तदभावनिश्चयस्य प्रतिबन्धकत्वादित्याशयः॥

सति साधनाव्यापकत्वम्—उपाधिः। साध्यसमानाधिकर-णात्यन्ताभावाप्रतियोगित्वं—साध्यव्यापकत्वम्। साधनव-

दीपिका

लक्षणमाह-साध्येति। उपाधिश्चतुर्विधः—केवलसाध्यव्यापकः,

विवृतिः

वर्त्तमानः सोपाधिक इति व्युत्पत्त्या उपाधिमानित्यर्थः। उपाधिमत्त्वञ्च स्वाभाववद्वृत्तित्वसम्बन्धेन, स्वम् = उपाधित्वेनाभिमतम्। एवं साध्ये साध्यतावच्छेदकाभावः, साधने साधनतावच्छेदकाभावः, हेतौ साध्या-व्यभिचरितत्वविशिष्टसाध्यसामानाधिकरण्याभावः, अवृत्तित्वविशिष्टं सा-ध्यम्, अवृत्तित्वविशिष्टं साधनमित्यादिकमपि व्याप्यत्वासिद्धिरेव ॥ साध्येति। यद्धर्मावच्छेदेन प्रतियोग्यधिकरणावृत्ति—साध्याधिकरण—वृत्त्यत्यन्ताभावप्रतियोगित्वाभावस्तद्धर्मवत्त्वं साध्यव्यापकत्वमित्यर्थः। तेन नार्द्रेन्धनसंयोगादेर्महानसीयत्वादिनाऽभावमादाय तस्य धूमव्यापकत्वहा-निः, आर्द्रेन्धनसंयोगत्वावच्छेदेन धूमाधिकरणवृत्त्यभावप्रतियोगित्वाभावस्या-क्षतत्वात् ॥ साधनवन्निष्ठेति। हेत्वधिकरणे वर्त्तमानोऽयोऽत्यन्ताभावस्त-न्निरूपितप्रतियोगितावत्त्वं साधनाव्यापकत्वम् ॥ तथाहीति। तथा च धूमा-ऽधिकरणे वर्त्तमानो नार्द्रेन्धनसंयोगाभावः, अपि तु घटाभाव एव, तत्प्रतियो-गित्वं घटे, तदभावश्चार्द्रेन्धनसंयोगे, इत्यार्द्रेन्धनसंयोगो भवति धूमव्यापकः, न तु वह्निरूपहेतुव्यापकः, वह्न्यधिकरणे = अयःपिण्डे आर्द्रेन्धनसंयोगा-भावस्य सत्त्वेन तत्प्रतियोगिताया आर्द्रेन्धनसंयोगे वर्त्तमानत्वात् ॥ उप-संहरति-एवमिति। सोपाधिकत्वात् = पूर्वोक्तसम्बन्धेन उपाधिमत्त्वात्। वह्निमत्त्वं = वह्निः। नीलधूमोऽपि व्यर्थविशेषणवत्त्वेन व्याप्यत्वासिद्धः। व्यर्थत्वञ्च = स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटित-त्वम्। स्वं = व्यर्थतावच्छेदकत्वेनाभिमतमिति संक्षेपः ॥

दीपिकायामुपाधीन् विभजते-उपाधिरिति ॥ केवलेति। साध्य-

न्निष्ठात्यन्ताभावप्रतियोगित्वं—साधनाव्यापकत्वम्। 'पर्वतो-धूमवान्-वह्निमत्त्वादि'त्यत्रार्द्रेन्धनसंयोग-उपाधिः। 'यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम्, यत्र च वह्नि-स्तत्र आर्द्रेन्धनसंयोगो नास्ति, अयोगोलके आर्द्रेन्धनसंयोगा-

दीपिका

पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदा-सीनधर्मावच्छिन्नसाध्यव्यापकश्चेति। आद्यः—आर्द्रेन्धनसंयोगः। द्वितीयो-यथा—'वायुः—प्रत्यक्षः—प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र बहि-र्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम्। तृतीयो यथा-

विवृतिः

तावच्छेदकमात्रावच्छिन्नसाध्यव्यापक इत्यर्थः॥ पक्षेति। पक्षवृत्तिधर्मवि-शिष्टसाध्यव्यापक इत्यर्थः॥ साधनेति। हेतुस्वरूपधर्मविशिष्टसाध्यव्या-पक इत्यर्थः॥ उदासीनेति। पक्षवृत्तिधर्मभिन्नः साधनरूपधर्मभिन्नश्च यो धर्मस्तद्विशिष्टसाध्यव्यापक इत्यर्थः। आद्यः=केवलसाध्यव्यापकः॥ आर्द्रे-न्धनसंयोग इति। तस्य धूमत्वरूपकेवलसाध्यतावच्छेदकावच्छिन्नव्याप-कत्वादित्याशयः। द्वितीयः=पक्षवृत्तिधर्मविशिष्टसाध्यव्यापकः। वायुरिति=पक्षनिर्देशः। प्रत्यक्षः=प्रत्यक्षविषयतावान्। प्रत्यक्षस्पर्शाश्रयत्वात्=प्रत्यक्षविषयीभूतस्पर्शाधिकरणत्वात्। इत्यत्र=अस्मिन् हेतौ॥ बहिरिति। वायुस्वरूपपक्षनिष्ठं यत् आत्मादिभिन्नात्मकबहिर्द्रव्यत्वं तद्विशिष्टस्य प्रत्य-क्षविषयत्वस्य व्यापकमित्यर्थः। उद्भूतरूपवत्त्वं=बहिरिन्द्रियजन्यद्रव्य-प्रत्यक्षप्रयोजकरूपवत्त्वम्। तथा चोद्भूतरूपवत्त्वस्य केवलप्रत्यक्षत्वरूपसा-ध्यव्यापकत्वं न सम्भवति, केवलप्रत्यक्षत्वस्याऽऽत्मादौ वर्त्तमानतया तत्रोद्भूत-रूपस्यासत्वात्, अत उद्भूतरूपरूपोपाधेर्वायुस्वरूपपक्षधर्मबहिर्द्रव्यत्वविशि-ष्टप्रत्यक्षत्वव्यापकत्वमेव वक्तव्यं, तादृशप्रत्यक्षत्ववति सर्वत्रैव घटादौ उद्भूत-

भावादिति—साधनाव्यापकत्वम्। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः। सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम्।

दीपिका

'प्रागभावो-विनाशी-जन्यत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्व-

विवृतिः

रूपवत्त्वस्य विद्यमानत्वादिति भावः। तृतीयः=साधनरूपधर्मविशिष्टसाध्यव्यापकः। प्रागभाव इति=पक्षनिर्देशः। विनाशी=ध्वंसप्रतियोगी। जन्यत्वात्=प्रागभावप्रतियोगित्वात्। इत्यत्र=अस्मिन् हेतौ। जन्यत्वेति। जन्यत्वरूपहेतुविशिष्टस्य विनाशित्वस्य व्यापकमित्यर्थः। भावत्वं=अभावभिन्नत्वं। तथा चात्रापि केवलविनाशित्वस्य प्रागभावे सत्त्वात् तत्र भावत्वाभावेन भावत्वं न तादृशसाध्यव्यापकमपि तु प्रागभावप्रतियोगित्वरूपहेतुविशिष्टविनाशित्वव्यापकमेव तत्, प्रागभावप्रतियोगित्वविशिष्टविनाशित्ववति सर्वत्रैव घटपटादौ भावत्वस्य सत्त्वादित्याशयः। एवं प्रागभावप्रतियोगित्वरूपहेतोर्ध्वंसे विद्यमानत्वात् तत्र भावत्वविरहेण हेत्वव्यापकमपि भावत्वं बोध्यम्॥ चतुर्थः=उदासीनधर्मविशिष्टसाध्यव्यापकः। इत्यत्र=प्रमेयत्वस्वरूपे हेतौ।

न्यायबोधिनी

संयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्। एवं वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतम्

---

आर्द्रेन्धनसंयोगव्याप्यत्वं = आर्द्रेन्धनसंयोगाभाववदवृत्तित्वम्, तस्य 'धूमे-गृहीत'मित्यन्वयः॥ वह्नौ तदव्याप्यत्वं = वह्नौ आर्द्रेन्धनसंयोगाभाववद्वृत्तित्वम्॥ उपाधिव्यभिचरितत्वं = उपाध्यभाववद्वृत्तित्वं, साधने = हेतौ। धूमव्यभिचारी = धूमाभाववद्वृत्तिः॥

## दीपिका

व्यापकं भावत्वम् । चतुर्थस्तु-'प्रागभावो-विनाशी-प्रमेयत्वात्'-इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकम् भावत्वम् ॥

## विवृतिः

जन्यत्वेति । प्रागभावप्रतियोगित्वविशिष्टविनाशित्वव्यापकमित्यर्थः। निरुक्तप्रागभावप्रतियोगित्वरूपजन्यत्वस्य हेतुभिन्नत्वेन प्रागभावरूपपक्षावृत्तित्वेन चोदासीनत्वमित्यभिप्रायः। अन्यत् पूर्ववत् । अत्र यद्धर्मविशिष्टस्य साध्यस्य व्यापकत्वमुपाधेस्तद्धर्मविशिष्टस्यैव हेतोरव्यापकत्वं वक्तव्यम्, तेन महानसत्वविशिष्टवह्निव्यापकस्य महानसत्वादेः पर्वतत्वादिविशिष्टधूमाव्यापकत्वेऽपि न वह्निसाध्यकधूमादेः सोपाधिकत्वापत्तिरिति ध्येयम् ।

## न्यायबोधिनी

तदेव—व्यभिचरितत्वम् । तथा चोपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव, अनुमानप्रकारश्च—पूर्वानुमानहेतुं पक्षीकृत्य—'वह्निः—धूमव्यभिचारी, धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात्, घटत्वादिवत्'; यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारीति । एवं प्रकारेण प्रकृतानुमानहेतुभूते पत्ते साध्यव्यभिचारोन्नायकतया दूषकत्वमुपाधेः फलम् । तथा च धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

---

धूमेति । धूमव्यापको यः आर्द्रेन्धनसंयोगस्तदभाववद्वृत्तित्वादित्यर्थः । यः = वह्न्यादिः । यत्साध्यव्यापकव्यभिचारी = धूमादिसाध्यव्यापकार्द्रेन्धनादिव्यभिचारी । स वह्न्यादिः सर्वोऽपि हेत्वभिमतः ॥

साध्यव्यभिचारी—प्रकृतधूमादिरूपसाध्यव्यभिचारी ।

एवमिति । धूमादिसाध्यकवह्न्यादिरूपेहेतुभूते पक्षे—इत्यर्थः । साध्य-

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः, यथा—'वह्निरनुष्णो-द्रव्यत्वादि'ति। अत्राऽनुष्णत्वं साध्यं, तदभाव उष्णत्वं-स्पार्शनप्रत्यक्षेण गृह्यते, इति बाधितत्वम् ॥

दीपिका

बाधितस्य लक्षणमाह-यस्येति। अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम्, इतरेषां परामर्शप्रतिबन्धकत्वम्, तत्रापि साधारणस्याव्यभिचाराभाववत्तया, विरुद्धस्य साध्यसामानाधिकरण्याभाववत्तया,

विवृतिः

मूले-यस्येति। हेतोरित्यर्थः। साध्याभावः = प्रकृतपक्षे प्रकृतसाध्यस्य अभावः। प्रमाणेन = प्रत्यक्षादिना। निश्चितः = निश्चयविषयीभूतः। स हेतुर्बाधितः = बाधविशिष्टः। गृह्यत इति। निश्चीयते इत्यर्थः। इति = तस्मान्निश्चयाद्धेतोः। बाधितत्वमिति। द्रव्यत्वहेतोरित्यादिः। दीपिकायाम्-अत्रेति। निरुक्तहेत्वाभासेषु मध्ये इत्यर्थः। बाधस्य = पक्षे साध्याभावनिश्चयस्य। ग्राह्याभावनिश्चयत्वेन = तद्वत्ताज्ञानविषयीभूतस्य तस्याभावनिश्चयत्वेन। सत्प्रतिपक्षस्य=पक्षे साध्याभावव्याप्यवत्तानिश्चयस्य। विरोधिज्ञानसामग्रीत्वेन = विरुद्धानुमितिसामग्रीत्वेन, तद्वत्ताज्ञानविषयीभूतस्य तस्याभावव्याप्यवत्तानिश्चयत्वेनेति यावत्। साक्षादिति। इतरानधीनपक्षधर्मिकसाध्यविधेयताकानुमित्यनुत्पादप्रयोजकत्वमित्यर्थः। इतरेषाम् = व्यभिचारस्वरूपासिद्ध्यादिनिश्चयानाम्। परामर्शप्रतिबन्धकत्वं = 'प्रकृतपक्षधर्मिक—प्रकृतसाध्यव्याप्यहेतुमान् पक्ष, इत्याकारकनिश्चयानुत्पादप्रयोजकत्वम्। तत्राऽपि = व्यभिचारादिनिश्चयेष्वपि। साधारणस्य = हेतुधर्मिकसाध्याऽभाववद्वृत्तित्वनिश्चयस्य। अव्यभिचारेति। अव्यभि-

व्यभिचारोत्थापकतया—वह्न्यादिहेतुकधूमादिसाध्यस्य व्यभिचारानुमापकतया।

दीपिका

व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभाववत्तया, असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम् । आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् । उपाधिस्तु व्यभि-

विवृतिः

व्याप्तिः=व्याप्तिः, सा च 'साध्यसामानाधिकरण्यविशिष्टसाध्याभाववदवृत्तित्व'रूपा, तस्या योऽभावः तन्निश्चयस्वरूपतयेत्यर्थः । विरुद्धस्य=विरुद्धत्वनिश्चयस्य—विरोधनिश्चयस्येति यावत् ।

साध्यसामानाधिकरण्याभाववत्तया=हेतुधर्मिकसाध्याधिकरणवृत्तित्वाभावनिश्चयस्वरूपतया । व्याप्यत्वाऽसिद्धस्य=व्याप्यत्वाऽसिद्धिनिश्चयस्य । विशिष्टव्याप्त्यभाववत्तया = साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्याभावरूपव्याप्त्यभावनिश्चयस्वरूपतया । असाधारणानुपसंहारिणोः = असाधारण्यनिश्चयानुपसंहारित्वनिश्चययोः । व्याप्तिसंशयाधायकतया= व्याप्तिसंशयप्रयोजकतया । तादृशस्थले दृष्टान्ताभावेन साध्यहेत्वोः सामानाधिकरण्यनिश्चयाभावात् पक्षान्तर्भावेनैव व्याप्तिसंशयः, इति व्याप्तिनिश्चयविघटकत्वं तयोरस्त्येवेत्याशयः । व्याप्तिज्ञानप्रतिबन्धकत्वं = व्याप्तिनिश्चयानुत्पादप्रयोजकत्वम् । आश्रयासिद्धस्वरूपासिद्धयोः = आश्रयासिद्धिनिश्चयस्वरूपासिद्धिनिश्चययोः ।

पक्षधर्मताज्ञानप्रतिबन्धकत्वं = प्रकृतपक्षे प्रकृतहेतुमत्ताज्ञानानुत्पादप्रयोजकत्वम् । उपाधेर्हेत्वाभासतां खण्डयति—उपाधिस्त्विति । साध्यव्यापक-साधनाऽव्यापकीभूतस्य धर्मस्येत्यर्थः । व्यभिचारज्ञानद्वारा = हेतौ साध्याभाववद्वृत्तित्वज्ञानं सम्पाद्य । व्याप्तिज्ञानप्रतिबन्धकः = व्याप्तिज्ञानानुत्पादप्रयोजकः । तथा च साक्षादनुमितितत्करणान्यतरप्रतिबन्धकयथार्थ

न्यायबोधिनी

यस्येति । यस्य=हेतोः, साध्यस्याभावः =साध्याभावः, स

दीपिका

चारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः। सिद्धसाधनन्तु पक्षताविघटकतया आश्रयासिद्धेऽन्तर्भवतीति-प्राञ्चः। निग्रहस्थानान्तरमिति-नवीनाः॥ इति तर्कदीपिकायाम् अनुमानं समाप्तम्॥

विवृतिः

ज्ञानविषयस्यैव हेत्वाभासतया उपाधेस्तथात्वाभावेन न हेत्वाभासत्वम्, सिद्धान्ते उपाध्यभावस्य व्याप्तिस्वरूपत्वानभ्युपगमादित्याशयः। सिद्धसाधनविषयीभूतस्य साध्यवत्पक्षादेरपि न सर्ववादिसिद्धहेत्वाभासत्वमित्याह—सिद्धसाधनन्त्विति। पक्षे उभयवाद्यभिमतसाध्यनिश्चयस्त्वित्यर्थः। पक्षताविघटकतया = सिषाधयिषाविरहविशिष्टसाध्यनिश्चयाभावाऽसिद्धिप्रयोजकतया। प्राञ्च इति। तन्मते प्रकृतपक्षताज्ञानानुत्पादप्रयोजकज्ञानविषयस्यैवाश्रयासिद्धिरूपत्वादिति भावः। मतान्तरमाह—निग्रहेति। हेत्वाभासातिरिक्तनिग्रहस्य स्थानं सिद्धसाधनमिति नवीनाः प्राहुरित्याशयः।

❀ इति दीपिकाविवृतौ अनुमानपरिच्छेदः ❀

न्यायबोधिनी

च प्रमाणान्तरेण, निश्चितः, स = बाधित इत्यर्थः। तथाच प्रात्यक्षिकसाध्यबाधितनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम्। बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते।

❀ इति न्यायबोधिन्यामनुमानपरिच्छेदः ❀

---

प्राचीनमतमाह—तथा चेति—अधिकं दीपिकाव्याख्यायामभिहितम्॥

बाधितसाध्यकत्वात् = साध्याभावादिविशिष्टपक्षकत्वात्, अधिकमभिहितं प्राक्॥

## ❀ अथोपमानपरिच्छेदः ❀

उपमितिकरणम्—उपमानम् । संज्ञा-संज्ञि-संबन्ध-ज्ञानम्-उपमितिः, तत्करणं-सादृश्यज्ञानम्, तथा हि—कश्चित् गवय-पदार्थमजानन् कुतश्चिदारण्यकपुरुषात्-'गोसदृशो गवय' इति

दीपिका

उपमानं लक्षयति—उपमितीति ॥ इत्युपमानम् ॥

विवृतिः

मूले उपमितिकरणमिति । उपमितित्वावच्छिन्नकरणमुपमानम् इत्यर्थः, तस्य चोपमितिं विना ज्ञातुमशक्यत्वादुपमितिलक्षणमाह—संज्ञेति। संज्ञया=गवयादिपदेन सह संज्ञिनो = गवयाद्यर्थस्य यः सम्बन्धः=वाच्य-वाचकभावात्मकः, तद्विषयको निश्चय उपमितिरित्यर्थः । तत्करणं=तादृशोप-मितिकरणम् । सादृश्यज्ञानं=गवयादौ गवादिसादृश्यज्ञानं, गोभिन्नत्वविशिष्ट-गोवृत्तिकिञ्चिद्धर्मप्रकारको निश्चय इति यावत् । कश्चिद्=ग्रामीणः पुरुषः । गवयशब्दवाच्यम् = गवयपदार्थं । गोसदृशः—इत्यादि । 'गोसदृशो गवयः गवयपदवाच्य' इत्याकारकं वाक्यं श्रुत्वा इत्यर्थः । वनं गतः सग्रा-मीणः पुरुषः गोसदृशं पिण्डं पश्यति, ततो वाक्यार्थं स्मरन् =गोसदृशो गवयपदवाच्य इत्याकारकातिदेशवाक्यार्थं स्मरन्, तदनन्तरं=तदुत्तरकालम्,

न्यायबोधिनी

उपमानं लक्षयति—उपमितिकरणमिति । उपमितिं लक्ष-यति—संज्ञासंज्ञीति । संज्ञा नाम-पदम् । संज्ञी = अर्थः । तयोः संबन्धः—शक्तिः । तथाच पदपदार्थसंबन्धज्ञानमुपमितिरित्यर्थः ।

---

पदपदार्थेति । पदपदार्थयोर्वाच्यवाचकभावात्मकशक्तिनिश्चयः = उप-मितिरित्यर्थ इत्यर्थः ॥

श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति, तदनन्तरम्—'असौ गवयशब्दवाच्य' इत्युपमितिरुत्पद्यते ॥



विवृतिः

निरुक्तगोसादृश्यावच्छिन्नपिण्डदर्शनजन्यातिदेशवाक्यार्थस्मरणरूपव्यापारात्मककारणकलापोत्तरमिति यावत्। अयमिति। गवय इत्यर्थः। यथाश्रुते गवयान्तरे वाच्यतानिश्चयस्याऽसम्भवः स्यादिति ध्येयम्। गवयशब्दवाच्यः=गवयपदवाच्यतावान्। इति=इत्याकारको निश्चय इति संक्षेपः।

❀ इति दीपिकाविवृतावुपमानपरिच्छेदः ❀



न्यायबोधिनी

उपमानं नाम=अतिदेशवाक्यार्थज्ञानम्। अतिदेशवाक्यार्थस्मरणं—व्यापारः। उपमितिः—फलम्। 'गोसदृशो गवयपदवाच्य' इत्याकारकवाक्यात् 'गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकं' यज्ज्ञानं—जायते तदेव करणम् ॥

॥ इति न्यायबोधिन्यामुपमानपरिच्छेदः ॥



---

सादृश्यावच्छिन्नेति। 'गोसदृशो गवयपदवाच्यतावानि'त्याकारको यो निश्चय इत्यर्थः।

## ❀ अथ शब्दपरिच्छेदः ❀

आप्तवाक्यं-शब्दः। आप्तस्तु-यथार्थवक्ता। वाक्यं-

दीपिका

शब्दं लक्षयति-आप्तेति। वाक्यं लक्षयति-वाक्यमिति। पदलक्षणमाह-शक्तमिति। अर्थस्मृत्यनुकूलपदार्थसम्बन्धः शक्तिः। सा च पदार्थान्तरमिति-मीमांसकाः, तन्निरासार्थमाह

विवृतिः

मूले-आप्तेति। आप्तः=वाक्यार्थयथार्थज्ञानवान्, तदुक्तत्ववत् वाक्यमित्यर्थः। शब्द इति। शाब्दबोधजनकतावच्छेदकानुपूर्वीमानित्यर्थः। यथार्थवक्ता = यथार्थज्ञानजनकवाक्योच्चारणकर्ता। पदसमूहः = परस्परसाकांक्षपदसमुदायः। यथेत्यादि। दण्डेन शुक्लां गामानयेत्यर्थः। पदज्ञानं = शाब्दबोधे करणं, पदार्थस्मृतिः = व्यापारः, शाब्दबोधः = प्रमितिः, शाब्दबोधत्वञ्च = पदज्ञानकरणकज्ञानत्वमिति तु नव्याः। अस्मादिति। स्वजन्यबोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यत्वसम्बन्धावच्छिन्ना या प्रकारता सा शक्तिः, तद्वत् पदं शक्तम् वाचकमित्यर्थः। स्वं = वाचकत्वेनाभिमतं पदम्। वाच्यता च तादृशप्रकारतानिरूपितविशेष्यता,-सैव शक्यतेत्युच्यते—इति तु तत्त्वम्। दीपिकायां—पदार्थेति। पदार्थस्मरणप्रयोजकीभूतः पदपदार्थयोः सम्बन्ध इत्यर्थः। पदार्थान्तरम्—दाहानुकूलशक्तिवत् पदार्थान्तरम्। मीमांसका वदन्तीति शेषः। तन्नि-

न्यायबोधिनी

शब्दं लक्षयति—आप्तेति। 'आप्तोच्चरितत्वे सति वाक्यत्वं' शब्दस्य—लक्षणम्। प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम्। वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत-आप्तोच्चरितत्वनिवेशः।

पदसमूहः, यथा—'गामानये'ति शक्तं-पदम्। 'अस्मात्पदादयमर्थो बोद्धव्य' इतीश्वरसंकेतः—शक्तिः॥

दीपिका

—अस्मादिति। डित्थादीनामिव घटादीनामपि संकेत एव शक्तिः, न तु पदार्थान्तरमित्यर्थः॥

'गवा'दिशब्दानां जातावेव शक्तिः, विशेषणतया ज्ञातेः

विवृतिः

रासार्थं = शक्तेः पदार्थान्तरत्वनिरासार्थम्। डित्थेति। यथा डित्थादिपदानां दारुमयहस्त्यादिबोधकतयेच्छैव शक्तिरुभयवादिसिद्धा तथा घटादिपदानामपि इच्छारूपसंकेत एव शक्तिः, तस्याः पदार्थान्तरत्वे मानाभाव इत्याशयः। यद्यपि अपभ्रंशादिपदजन्यबोधविषयतायाः वस्तुभूतार्थनिष्ठायाः, लाक्षणिकगङ्गादिपदजन्यबोधविषयतायाः तीरादिनिष्ठायाश्च, भगवत्संकेतविषयतया तयोरपि शक्तत्वं दुर्वारम्, नचेष्टापत्तिः, अपभ्रंशादीनां वाचकत्वे तेषां धर्मकर्मण्युपयोगापत्तेः, लाक्षणिकगङ्गादिपदानां तथात्वे तु तेषां सृष्टिकालस्वव्यापकतीरबोधकतापत्तेः। तथाऽपि अपभ्रंशादिजन्यत्वेन तादृशगङ्गादिपदजन्यत्वेन च बोधविषयतायाः भगवदिच्छाविषयत्वाऽनभ्युपगमान्न तयोर्वाचकत्वमिति ध्येयम्। मीमांसकमतं दूषयितुमुपन्यस्यति—गवादीति। आदिपदात् घटादिपरिग्रहः। जातावेवेत्येवकारेण व्यक्तौ शक्तिव्यवच्छेदः। शक्तिरिति। तथा च 'गोपदं गोत्वे शक्तं'

न्यायबोधिनी

तावन्मात्रोक्तौ जवगडदशादावतिव्याप्तिरतो—वाक्यत्वम्। आप्तत्वं च = प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्'। तथा च—'प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्व'मिति—पर्यवसन्नोऽर्थः। वस्तुतस्तु पदज्ञानं करणम्। वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिः = व्यापारः।

दीपिका

प्रथममुपस्थितत्वात्, व्यक्तिलाभस्तु आक्षेपात् इति केचित् ।

विवृतिः

इत्याकारकज्ञानमेव केषांचिन्मते गोत्वविषयकशाब्दबोधकारणं, केषांचिन्मते च गोत्वविशिष्टगोविषयकशाब्दबोधे कारणमिति भावः । जातिशक्तौ युक्तिमाह–विशेषणतयेति । गवादिविशेषणतयेत्यर्थः । जातेः=गोत्वादिजातेः । प्रथमोपस्थितत्वात्=प्रथमं ज्ञायमानत्वात् । तथा च विशिष्टज्ञानात्पूर्वं विशेषणज्ञानस्यावश्यकतया लाघवात् प्रथमोपस्थितविशेषणात्मकजातावेव शक्तिरिति भावः । नन्वेवं 'गामानये'त्यत्र गोत्वकर्मताकत्वस्यानयनादौ बाधिततया गोकर्मताकत्वेन सर्वानुभवसिद्धानयनप्रतीतिर्न स्यादित्यत आह–व्यक्तीति । गवादिव्यक्तिवृत्तिकर्मताकत्वेनाऽऽनयनादेर्निश्चय इत्यर्थः । आक्षेपात्=अनुमानात् । तथा च 'गामानये'ति वाक्यात् गोत्वकर्मताकत्वेनाऽऽनयनबोधानन्तरं 'तादृशानयनं–गोवृत्तिकर्मताकम्—स्वाश्रयवृत्तित्वसम्बन्धेन

न्यायबोधिनी

वाक्यार्थज्ञानं = शाब्दबोधः = फलम् । वृत्तिर्नाम = शक्तिलक्षणान्यतररूपा । शक्तिर्नाम = घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः,–ईश्वरसंकेतो नाम = ईश्वरेच्छा, सैव शक्तिरित्यर्थः । शक्तिनिरूपकत्वमेव पदे शक्तत्वम् । शक्यसंबन्धो-लक्षणा, सा द्विविधा–गौणी शुद्धा चेति । गौणी नाम— सादृश्यविशिष्टे लक्षणा, यथा—'सिंहो माणवक' इत्यादौ सिंहपदस्य सिंहसादृश्य-

---

घटादिविशेष्यकेति, । घटो घटपदजन्यबोधविषयतावान् भवतु— इत्याकारकेश्वरसंकेत इत्यर्थः ।

सैव = ईश्वरेच्छैव । शक्तिनिरूपकत्वं, शक्तिनिरूपिततादृशविषयत्वनिष्ठविषयतान्तःपातिजन्यत्वनिष्ठविषयतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारता-

दीपिका

तन्न। 'गामानये'त्यादौ वृद्धव्यवहारेण सर्वत्राऽऽनयनादेर्व्यक्तावेव सम्भवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात् ॥

विवृतिः

गोत्ववृत्तिकर्मताकत्वा'दित्यनुमानेनानयनादौ गोवृत्तिकर्मताकत्वनिश्चय इति भावः। अनुमानादिकं विनापि 'गामानये'त्यादिवाक्यात् गोकर्मताकत्वेनाऽऽनयनान्वयबोधस्य सर्वानुभवसिद्धतया गवादौ शक्त्य-स्वीकारे तादृशान्वयबोधो न सम्भवतीत्याशयेन दूषयति—तन्नेति। 'गामानये'त्यादौ = गामानयेत्यादिवाक्यजन्यशाब्दबोधादौ। आदिप-दात् 'घटमानये'त्यादिवाक्यजन्यशाब्दबोधपरिग्रहः। अस्य सर्वत्रेत्यनेन सम्बन्धः, तथा च तादृशे सर्वत्र शाब्दबोधादावित्यर्थः। वृद्धव्यवहारेण = वृद्धव्यवहाराधीनशक्तिग्रहेण। आनयनादेः=आनयनकर्मत्वादेः। व्यक्तावेव=गवादिव्यक्तिवृत्तित्वेनैव। सम्भवेन=विषयीकरणेन। जातिवि-शिष्टव्यक्तौ=गोत्वादिजातिविशिष्टगवादिव्यक्तौ। शक्तिस्वीकारात्=गोप-दवाच्यताया उपगमात्। तथा च गवादेरशक्यत्वे शाब्देबोधे तद्भानं न सम्भवतीति हृदयम्। वस्तुतो गवादेरशक्यत्वे 'गौर्गच्छती'त्यत्र गति-

न्यायबोधिनी

विशिष्टे लक्षणा। शुद्धा द्विविधा—जहल्लक्षणा, अजहल्लक्षणा चेति। 'लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका' लक्षणा—जहल्लक्षणा' यथा—'गङ्गायां घोष' इत्यत्र 'गङ्गा'पदवाच्यप्रवाह-सम्बन्धस्य तीरे सत्वात्तादृशशक्यसंबन्धरूपलक्षणाज्ञानात् गङ्गापदा-त्तीरोपस्थितिः। 'लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयो-

---

श्रयत्वम्। लक्ष्यतावच्छेदकरूपेण=तीरत्वादिरूपेण। लक्ष्यमात्रबोधप्रयोजिका—तीरादिमात्रबोधप्रयोजिका। लक्ष्यतावच्छेदकरूपेण—दध्युपघातकत्वादिरूपेण।

लक्ष्येति। लक्ष्यः=काकभिन्नः, शक्यः = काकः, तदुभयबोधप्रयोजिकेत्यर्थः॥

दीपिका

शक्तिग्रहश्च वृद्धव्यवहारेण, तथा हि—व्युत्पित्सुर्बालो 'गामानय'-इत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य

विवृतिः

मत्त्वेन गोत्वबोधानन्तरं स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्त्वहेतुना समवायेन गतिमत्त्वबोधो गवादौ न सम्भवति, स्वाश्रयवृत्तित्वसम्बन्धेन गवादौ गतिमत्त्वस्याऽसत्त्वेन तस्य स्वरूपासिद्धत्वात्, अतो व्यक्तावेव शक्तिः स्वीकार्य्येति ध्येयम् ॥ नन्वेवं शक्तेः संकेतात्मकत्वेऽपि बालकस्य प्रथमं कुतस्तद्ग्रहः सम्भवतीत्यत आह—शक्तिग्रहश्चेति। प्रथमं तादृशशक्तिग्रहश्चेत्यर्थः। वृद्धव्यवहारेण = व्युत्पन्नवृद्धव्यवहारेण। तृतीयार्थः प्रयोज्यत्वम्, अन्वयश्चास्य शक्तिग्रह-इत्यनेन। व्यवहाराधीनं शक्तिग्रहं प्रदर्शयति-तथाहीति। व्युत्पित्सुः = शक्तिज्ञानेच्छावान्। 'बाल' इत्यस्य 'व्युत्पद्यते' इत्यग्रिमेणान्वयः। गामित्यादि। 'गामानये'त्याकारकं यत् व्युत्पन्नस्य प्रयोजकवृद्धस्य वाक्यं तत्-श्रवणानन्तरमित्यर्थः। मध्यमवृद्धस्य = व्युत्पन्नप्रयोज्यवृद्धान्तरस्य। प्रवृत्तिं = गवानयनप्रवृत्तिम्। उपलभ्य = तदीयचेष्टया निश्चित्य। गवानयनञ्च दृष्ट्वा = तादृशनिश्चयानन्तरं गवानयनं प्रत्यक्षीकृत्य। मध्यमेत्यादि। तदनन्तरं व्युत्पन्नवृद्धान्तरस्य प्रवृत्तिजनकगवानयनज्ञानस्यासाधारणहेतुकत्वं सामान्यतोऽनुमाय, "तादृश'गामानये'त्यादि वाक्यसत्त्वे गवानयनज्ञानं-असत्त्वे च ने"त्याकारकनिश्चयाभ्यां, तादृशज्ञाने-

न्यायबोधिनी

जिका' लक्षणा—अजहल्लक्षणा, यथा—'काकेभ्यो दधि रक्ष्यता'मित्यत्र काकपदस्य दध्युपघातके लक्षणा, लक्ष्यतावच्छेदकं दध्युपघातकत्वम्, तेन रूपेण दध्युपघातकानां सर्वेषां काकविडालकुक्कुटसारमेयादीनां शक्यलक्ष्याणां सर्वेषां बोधात्। जहदजहल्लक्षणा वेदान्तिनां मते। (साच शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्र-

दीपिका

गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां जन्यत्वं निश्चित्य—'अश्वमानय' 'गां बधान'—इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्य अश्वत्वविशिष्टे शक्ति'रिति व्युत्पद्यते ॥

ननु—सर्वत्र कार्य्यपरत्वात् व्यवहारस्य कार्य्यवाक्ये एव

विवृतिः

श्रुतं यत् उत्तमवृद्धपुरुषोच्चरितं वाक्यं तज्जन्यत्वं निश्चित्येत्यर्थः। आवापोद्वापाभ्यां = अन्वयव्यतिरेकाभ्याम्। गोत्वविशिष्टे शक्तिः = गोत्वविशिष्टनिरूपितवाचकत्वम्। एवमग्रेऽपि। इति=इत्यादिरीत्या। व्युत्पद्यते = व्युत्पन्नो भवति, शक्तिं गृह्णातीति यावत्। तदनन्तरञ्चोपमानादितः शक्तिग्रहः सम्भवतीति भावः। प्रथमं पृथुकस्य यदि कार्य्यतावाचकलिङादिपदसाकांक्षपदत्वावच्छेदेनैव शक्तिग्रहस्तदोत्तरकालमपि तादृशपदे शक्तिग्रहानन्तरमेव सर्वत्र शाब्दबोधः सम्पादनीयः, पूर्वगृहीतस्य परित्यागे मानाभावात्, तथा च 'घटोऽस्ती'त्यादिप्रसिद्धवाक्यात् शाब्दबोधो न स्यादित्याशंकते—नन्विति। सर्वत्रेति। सर्वेषां पदानामित्यर्थः। षष्ठ्यर्थे सप्तमी। कार्यपरत्वात् = कार्यत्वबोधेच्छयोच्चरितपदसाकांक्षत्वात्। व्यवहारस्य = वृद्धव्यवहारस्य। प्रयोज्यत्वं षष्ठ्यर्थः, अन्वयश्चास्य व्युत्पत्तिशब्दार्थे 'शक्तिग्रह'इत्यनेन। कार्यवाक्ये—कार्यताविषयकबोधजनके पदे। एवकारव्यवच्छेद्यं स्पष्टयति—नेति। सिद्धे = कार्यतावाचकपदनिराकांक्षे पदे। एवमग्रेऽपि। तथा च 'घटोऽस्ती'त्यादा'वस्ति'—पदसाकांक्ष'घट'पदेशक्त्यग्रहेण तादृशवाक्याच्छाब्दबोध एव न सम्भवतीति हृदयम्। समाधत्ते—नेति।

न्यायबोधिनी

बोधप्रयोजिका, यथा—'तत्त्वमसी'त्यत्र सर्वज्ञत्वकिंचिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात् जहदजहल्लक्षणा) ॥

दीपिका

व्युत्पत्तिः, न सिद्धे,—इति चेन्न। 'काञ्च्यां त्रिभुवनतिलको भूपतिरि'त्यादौ सिद्धेऽपि व्यवहारात्, 'विकसितपद्मे मधूनि पिबति मधुकर' इत्यादौ प्रसिद्धपदसमभिव्याहारात् सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च।

लक्षणापि शब्दवृत्तिः। शक्यसम्बन्धो लक्षणा, 'गङ्गायां घोषः'

विवृतिः

इत्यादाविति। इत्यादिवाक्यघटकीभूते इत्यर्थः। आदिपदात् 'पटोऽस्ती'-त्यादिवाक्यपरिग्रहः। व्यवहारादिति। निरुक्तवाक्याच्छाब्दबोधस्य सर्वानुभवसिद्धत्वेन तदधीनव्यवहारदर्शनादित्यर्थः। ननु उक्तवाक्यघटक'भूपति'-पदोत्तरं विनिगमनाविरहात् 'दृश्यता'मित्यध्याहृत्याऽपि शाब्दबोधः सम्पादयितुं शक्यते इति कथं सिद्धे शक्तिग्रहः? इत्यत आह—विकसितेति। तथा चोक्तस्थले क्रियान्तरं विनैव शाब्दबोधस्यानुभविकतया अवश्यं सिद्धे शक्तिग्रहः स्वीकर्तव्य इत्याशयः। इत्यादौ = इत्यादिवाक्यघटकीभूते सिद्धेऽपीति योजना। प्रसिद्धपदसमभिव्याहारात्=मधुशब्दादेः 'पा' धात्वादेश्च सान्निध्यात्। प्रयोज्यत्वं पञ्चम्यर्थः। अन्वयश्चास्य पञ्चम्यन्त'दर्शन'पदार्थे। सिद्धेऽपीति। अपिः-अवधारणे, सिद्धे एव मधुकरपदे इत्यर्थः। मधुकरेति। मधुकराद्यर्थनिरूपिता या व्युत्पत्तिः = शक्तिः, तस्या दर्शनात् = ज्ञानात्, तादृशज्ञानोदयस्य सर्ववादिसिद्धत्वादित्यर्थः। तथा च प्रथमं कार्यतावाचिपदसाकांक्षपदे शक्तिग्रहोदयेऽपि पश्चादार्थवादिकवाक्याच्छाब्दबोधस्य सर्वानुभवसिद्धतया कार्यतावाचकपदनिराकांक्षपदेऽपि शक्तिग्रहः पूर्वपक्षिणाऽपि भवताऽङ्गीकर्तव्य इति भावः।

ननु शक्तिमात्रस्य वृत्तित्वे 'गङ्गायां घोष' इत्यादौ गङ्गादिपदात् तीरादिबोधो न स्यात्, गङ्गापदस्य तीराऽशक्तत्वात्, इत्यत आह-लक्षणाऽपीति। शब्दवृत्तिः = शब्दनिष्ठा सम्बन्धात्मिका वृत्तिः। सा च तच्छक्तिशून्यत्वे

दीपिका

इत्यत्र 'गङ्गा'पदवाच्य-प्रवाहसम्बन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते, सैन्धवादौ लवणाश्वयोः परस्परसम्बन्धाभावात् नानाशक्तिकल्पनम्। लक्षणा त्रिविधा-जहल्लक्षणा, अजहल्लक्षणा,

विवृतिः

सति तत्सम्बन्धिशक्तत्वरूपा, उक्तस्थले गङ्गापदस्य तीरशक्तिशून्यतया तीरसम्बन्धिनीरशक्ततया च तीरलक्षकत्वम्। अतएव सैन्धवपदस्य अश्व-सम्बन्धिलवणशक्तत्वेऽपि न तस्याश्वार्थलक्षकत्वम्, अश्वनिरूपितशक्ति-शून्यत्वस्य तत्राऽसत्त्वादिति नव्याः। स्वमतमाह—शक्येति। शक्यस्य गङ्गापदादिशक्यस्य प्रवाहादेर्यः सम्बन्धः सामीप्यादिस्वरूपः स इत्यर्थः। लक्षणेति। तथा च यत्पदस्य शक्यसम्बन्धो यत्रार्थे तत्पदं तत्रार्थे लाक्षणिकमिति भावः।

एतेन स्वशक्यसम्बन्धवदर्थकत्वं लाक्षणिकत्वमिति सूचितम्, स्वं = लाक्षणिकत्वेनाभिमतपदम्। इत्यत्र = एवम्भूतवाक्यस्थले। गङ्गापद-वाच्यप्रवाहसम्बन्धादेव = गङ्गापदशक्यप्रवाहसामीप्यात्मकसम्बन्धज्ञानादेव तीरोपस्थितौ = तत्सम्बन्धिनः तीरपदार्थस्य स्मरणे। तीरेऽपि = तीररूपा-र्थेऽपि। न शक्तिरिति। गङ्गा पदस्येत्यादिः। न कल्प्यते इति। सृष्टि-कालमारभ्य गङ्गापदस्य तीरबोधकत्वाभावादित्याशयः। नन्वेवं नानार्थक-शब्दोच्छेदः, एकार्थमात्रे एव शब्दस्य शक्तिरङ्गीक्रियताम्, अपरार्थे शक्यार्थसम्बन्धस्यानपायात्, अपरार्थे शब्दस्य लाक्षणिकत्वमेवास्तु इत्यत-आह—सैन्धवादाविति। परस्परसम्बन्धाभावात् = लवणार्थे अश्वार्थस्य अश्वार्थे लवणार्थस्य सम्बन्धाऽकल्पनात्। नानाशक्तिकल्पनं सैन्धव-पदस्येति शेषः।

तथा च सैन्धवादिपदस्य लवणार्थेऽश्वार्थे च शक्तिमत्तया नानार्थकत्वं तस्याक्षतमेवेति भावः। लक्षणाया भेदं प्रदर्शयति—जहदिति। जह-

दीपिका

जहदजहल्लक्षणा, चेति, यत्र वाच्यार्थस्यान्वयाभावस्तत्र जहल्लक्षणा, यथा–'मञ्चाः क्रोशन्ति ।' यत्र वाच्यार्थस्याप्यन्वयस्तत्र-अजहदिति, यथा-'छत्रिणो गच्छन्ति' । यत्र वाच्यैकदेशत्यागेन एकदेशान्वयस्तत्र

विवृतिः

लक्षणां निर्वक्ति—यत्रेति । यस्मिन् पदे इत्यर्थः । प्रतिपाद्यत्वं सप्तम्यर्थः । तस्य च वाच्यार्थेन सममन्वयः । तथा च यत्पदप्रतिपाद्यशक्यार्थस्य शक्यार्थान्तरेणान्वयाभाव इति पर्य्यवसितार्थः । तत्र = तस्मिन् पदे अत्र सप्तम्यर्थो वृत्तित्वं, अन्वयश्चास्य जहल्लक्षणेत्यनेन । तथा च तादृशे एव पदे जहल्लक्षणा वर्तमानेति भावः । दृष्टान्तमाह—मञ्चेति । तथा च मञ्चाः क्रोशन्तीत्यत्र क्रोशनान्विताख्यातार्थकृतेः मञ्चपदमुख्यार्थे मञ्चेऽन्वयासम्भवात् मञ्चपदे मञ्चस्थपुरुषरूपार्थे जहत्स्वार्थलक्षणा स्वीकर्तव्येति भावः । अजहत्स्वार्थलक्षणां निर्वक्ति—यत्रेति । यस्मिन् पदे इत्यर्थः । अत्राऽपि पूर्ववत् 'यत्'पदप्रतिपाद्यवाच्यार्थस्याऽपि वाच्यर्थान्तरेण सहान्वयः सम्भवति तत्पदेऽजहत्स्वार्थलक्षणा वर्तते इत्यर्थः पर्य्यवसितो ज्ञेयः । उदाहरति—यथेति । तथा च 'छत्रिणो गच्छन्ती'त्यत्र गमनान्विताख्यातवाच्यायाः कृतेः छत्रिपदलक्ष्यार्थे अच्छत्रिणि, मुख्यार्थे च छत्रिणि उभयत्रैवान्वयसम्भवात् तात्पर्य्यबलात् छत्रिपदस्य छत्रिणि अच्छत्रिणि चोभयत्रैवाजहत्स्वार्थलक्षणा स्वीकरणीयेति भावः । यद्यपि छत्रिसमुदायस्य वाक्यतया तत्र लक्षणा न सम्भवतीति विभाव्यते तदा तद्धितस्यैवात्र लाक्षणिकत्वमुपगन्तव्यमिति ध्येयम् । जहदजहल्लक्षणामाह—यत्रेति । ययोः पदयोरित्यर्थः । वाच्यैकदेशत्यागेन = वाच्यार्थयोरेकदेशपरित्यागेन । एकदेशान्वयः = परस्परमेकदेशार्थयोरन्वयः । तत्र = तयोः पदयोः, जहदजहल्लक्षणा वर्त्तते इति शेषः । उदाहरति—यत्रेति । तथा च 'तत्त्वमसी'त्यत्र तत्पदवाच्यार्थे परमात्मनि युष्मदर्थदुःखादिविशिष्टस्यात्मनः अभेदान्वया-

दीपिका

जहदजहदिति, यथा—'तत्त्वमसीति' । गौण्यपि लक्षणैव लक्ष्यमाण-गुणसम्बन्धस्वरूपा—'अग्निर्माणवक' इति ॥

विवृतिः

सम्भवात् तादृशवाक्यार्थयोरेकदेशात्मकं यत् परमत्वं दुःखादिवैशिष्ट्यञ्च, तत्परित्यज्य लक्षणया—केवलमात्मन एवाभेदान्वयः सम्पादनीय इति भावः । वस्तुतस्तादृशवाक्यं न जीवेश्वरयोरभेदप्रतिपादकं, तयोर्भेदस्यापि श्रुत्यादिप्रतिपाद्यत्वात्, आत्मनि आत्माऽभेदबोधस्य व्युत्पत्तिविरुद्धत्वाच्च, शुद्धचिन्मात्रं केवलात्मानं वावगाहमान एव तादृशवाक्यात् शाब्दबोधो जायते इत्यपि न, तादृशबोधस्य पदार्थद्वयसंसर्गानवगाहितया शाब्दत्वानुपपत्तेः, प्रत्यक्षात्मक एव तादृशबोध इति तु साहसं, नहि प्रत्यक्षत्व-शाब्दत्वयोः परस्परसामानाधिकरण्यं क्वाऽपि दृष्टचरम्, अन्यथा जातिसंकर-प्रसंगः स्यात् , अतस्तत्पदं तत्सदृशार्थे लाक्षणिकमेवाभ्युपगन्तव्यं, तथा चेश्व-रसदृशाभेदस्यैव युष्मदर्थे बोधः सम्पादनीय इत्यस्माकं नवीनः पन्थाः ॥ अस्ति तावत् वृत्त्यन्तरीभूता गौणीति मतं निर्युक्तिकमित्याह—गौण्यपीति । लक्षणैवेत्येवकारेण तस्या वृत्त्यन्तरत्वव्यवच्छेदः । लक्ष्यमाणेति । लक्ष्य-माणस्याग्निसदृशस्य यो गुणः = अग्निभिन्नत्वविशिष्टाऽग्निवृत्तिपवित्रत्वादि-स्वरूपः, तस्य सम्बन्धः = आश्रयत्वरूपः, तत्स्वरूपलक्षणेत्यर्थः । तथाचाग्नि-र्माणवक इत्यत्राग्निशब्दो अग्निसदृशे लक्षक इति भावः । नन्वस्त्वज्ञायमान-व्यञ्जनाऽपि काचिद्वृत्तिः, कथमन्यथा 'मुखं विकसितं स्मितमि'त्यादौ वि-पूर्वककसधातोर्विस्तारार्थलक्षणया मुखे प्रकटितहास्यादिमत्त्वानुभवानन्तरं कुसुमसदृशसौरभादिमत्त्वप्रतीतिः'न' हि सा लक्षणया सम्भवति, अन्वयानुप-पत्तिरूपस्य लक्षणाबीजस्य विरहात्, कथं वा 'अयं गौरवितो महान्नि'त्यादौ 'अयं महान् गौरवित' इति बोधानन्तरम् 'अयं गौः अवितो मेषतो महान्' इत्याकारको बोधः सहृदयानाम्, नह्यसौ शक्तिज्ञानजन्यः, शक्यार्थान्वयबोधे

दीपिका

व्यञ्जनापि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला अर्थशक्तिमूला च अनुमानादिना अन्यथासिद्धा ॥

विवृतिः

तत्तात्पर्यज्ञानस्य हेतुतया तस्याऽभावादित्यालङ्कारिकाणां मतं दूषयति- व्यञ्जनाऽपीति । शक्तिलक्षणान्तर्भूता = काचिच्छक्त्यन्तर्भूता, काचिच्च लक्षणान्तर्भूता । प्रथमे तात्पर्य्यवशात् विपूर्वककसधातोर्विस्तारार्थे कुसुम-सादृश्ये च लक्षणा, तदाश्रयरूपार्थस्तु निष्ठाप्रत्ययस्य, तादृशार्थस्य चाभेद एव मुखेऽनुभूयते, न चान्वयानुपपत्तिज्ञानाभावात् कथं तादृशार्थे लक्षणेति वाच्यम् । अन्वयानुपपत्तिज्ञानस्य लक्षणाबीजत्वे 'यष्टीः प्रवेशये' त्यादौ तदभावेन यष्टिधरे लक्षणाया असम्भवापत्तेः । द्वितीये एकविधबोधानन्तरं अपरार्थस्य शक्त्यैवबोधः सम्पादनीयः । नचान्यार्थे तात्पर्यज्ञानविरहात्कथं शक्तिधी-जन्यस्तादृशान्वयबोधः सम्भवतीति वाच्यम् । तात्पर्य्यज्ञानस्य शाब्दबोध-हेतुत्वे मानाभावात । वस्तुतः शक्त्या एकविधबोधानन्तरमन्यविधबोधो न शाब्दात्मकः सम्भवति, तत्तदर्थशाब्दानुभवे तत्तदर्थनिस्तात्पर्य्यकत्वज्ञानस्य प्रतिबन्धकत्वात्, अपि त्वन्यार्थस्य शक्त्यधीनोपस्थित्यनन्तरं तत्तदर्थविषयको मानस एव विशिष्टबोधस्तादृशोपस्थितिरूपज्ञानलक्षणासन्निकर्षात् सम्भव-त्येव । यदा तु 'गच्छ गच्छसि चेदि'त्यादौ गतिनिवृत्तिरूपस्य शब्दानुप-स्थाप्यार्थस्य बोधः, तत्र तादृशबोधो व्याप्तिज्ञानमूलकोऽनुमित्यात्मक एव भवतीति कृतं व्यञ्जनयेत्याह—शब्दशक्तिमूलेति । तादृशशक्तिरेव मूलं= प्रयोजकीभूता यत्र तादृशी व्यञ्जनेत्यर्थः । सेयं व्यञ्जना ज्ञानलक्षणया अन्यथा-सिद्धेत्यग्रेणान्वयः । अर्थशक्तिरिति । तत्तदर्थविषयकतात्पर्यं मूलं=प्रयोजकं यत्र तादृशीत्यर्थः । स्वर्थकचकारेण, सा तु 'व्यञ्जना' अनुमानेनान्यथा-सिद्धेत्यग्रेणान्वयो बोध्यः । तथा च 'गच्छ गच्छसि चेदि'त्यादिकं वाक्यं,— मदीयगतिनिवृत्तीच्छयोच्चरितं,—विलक्षणवाक्यत्वादि'त्यनुमानेन तात्पर्य

दीपिका

तात्पर्य्यानुपपत्तिर्लक्षणाबीजम् । तत्प्रतीतीच्छया उच्चरितत्व-रूपतात्पर्य्यज्ञानं च वाक्यार्थज्ञाने हेतुः, नानार्थानुरोधात् । प्रकरणादिकं तात्पर्य्यग्राहकम् ॥

विवृतिः

निश्चित्य लक्षणयैव तादृशगतिनिवृत्तिविषयको बोधः सहृदयानामिति भावः। 'यष्टीः प्रवेशये'त्यादौ यष्टिधरे लक्षणाऽनुपपत्तिभिया तात्पर्याऽनुपपत्तेरेव लक्षणाबीजत्वं स्वीकर्त्तव्यं, न तु मुख्यार्थान्वयाऽनुपपत्तेस्तथात्वमित्याह-तात्पर्येति । पदधर्मिकस्वशक्यार्थबोधेच्छयोच्चरितत्वाभावनिश्चय इत्यर्थः। लक्षणाबीजमिति । पदनिष्ठं यत् लाक्षणिकत्वं तज्ज्ञानं प्रति हेतुज्ञान-विधया प्रयोजकमित्यर्थः । तथाच–'एतत् गंगापदं,–अवश्यं तीरादिलक्षकं,–स्वशक्यार्थबोधेच्छयोच्चरितत्वाभाववत्त्वे सति बोधकत्वात्' इत्यानुमानिक-लक्षणाज्ञानं प्रति हेतुज्ञानविधया तात्पर्यानुपपत्तिज्ञानं प्रयोजकमिति भावः । तत्प्रतीतीति । तत्तदर्थबोधेच्छयोच्चरितत्वं तत्तदर्थतात्पर्यं, तस्य ज्ञानं = निश्चयः शाब्दबोधसामान्ये कारणमित्यर्थः । तात्पर्यज्ञानस्य शाब्द-कारणत्वे युक्तिमाह—नानार्थेति । नानार्थकहरिपदाधीनशाब्दबोधानुरोधा-दित्यर्थः । तथा च हरिपदाधीनकेवलसिंहादिविषयकशाब्दबोधे तादृश-सिंहादिविषयकतात्पर्यज्ञानस्य हेतुत्वमवश्यं वक्तव्यम्, अन्यथा हरिपदात् युगपदेव सिंहसूर्यादीनां शाब्दबोधापत्तिः स्यात् ॥ नन्वेवमेकस्मिन्नेवार्थे तात्पर्य्यग्रहो न त्वन्यत्रेत्यत्र किं नियामकमित्यत आह—प्रकरणादि-कमिति । तत्तत्कालज्ञानाद्यात्मकप्रकरणादिकमित्यर्थः । तात्पर्य्यग्राहकं = तात्पर्य्यानुमापकं, तात्पर्य्यनिश्चयप्रयोजकमिति यावत् । तथा च 'हरी रौती' त्यादिवाक्यघटकीभूतं हरिपदं-भेकबोधेच्छयोच्चरितं-वर्षाकालीनत्वात्' इत्या-नुमानिकतात्पर्य्यनिश्चये हेतुज्ञानविधया वर्षाकालज्ञानं प्रयोजकमित्याशयः । क्रियापदकारकपदयोः समभिव्याहारज्ञानमपि शाब्दबोधे कारणमित्याह—

दीपिका

'द्वार'मित्यादौ 'पिधेही'तिशब्दाध्याहारः । ननु-अर्थज्ञानार्थत्वात् शब्दस्यार्थमविज्ञाय शब्दाध्याहारासम्भवादर्थाध्याहार एव युक्त इति चेन्न, पदविशेषजन्यपदर्थोपस्थितेः शाब्दज्ञाने हेतुत्वात्, अन्यथा 'घटः कर्मत्वमानयनं कृति'रित्यत्रापि शाब्दज्ञानप्रसङ्गात् ॥

विवृतिः

द्वारमित्यादाविति । 'द्वारमि'त्याद्युक्तावित्यर्थः । 'पिधेही'ति शब्दाध्याहारः = पिधेहीति क्रियापदसमभिव्याहारनिश्चयः, ततः शाब्दबोध इति शेषः । तथा च द्वारादिकर्मताकत्वेन पिधानाद्यन्वयबुद्धौ पिधेहीत्यादिसमभिव्याहृतद्वितीयान्तद्वारादिपदत्वज्ञानस्य हेतुतया तादृशज्ञानसम्पादनायैव तादृशशब्दाध्याहार आवश्यक इत्याशयः । शङ्कते—नन्विति । अर्थज्ञानार्थत्वात् = अर्थज्ञानरूपप्रयोजनसाधनत्वात् । शब्दस्येत्यादि । अयं शब्दः—तत्तदर्थविषयकबोधजनकत्वेनासेच्छाविषयः—इत्याकारकज्ञानं सर्वत्र शाब्दबोधे हेतुः, तादृशज्ञानञ्चाऽर्थज्ञानं विना न सम्भवतीति सर्वत्र शाब्दबोधात्पूर्वमर्थज्ञानमावश्यकमित्याशयवानाह— अर्थमविज्ञायेति । वाक्यार्थमविज्ञायेत्यर्थः । शब्दाध्याहारासम्भवात् = अध्याहृतशब्दधर्मिकतादृशेच्छाविषयत्वनिश्चयासम्भवात् । अर्थाध्याहार एव = वाक्यार्थनिश्चय एव । युक्तः = प्रथमतो युक्तः । समाधानमाह–नेति । पदविशेषजन्यपदार्थोपस्थितेः = साकांक्षपदजन्यपदार्थोपस्थितेः । शाब्दज्ञाने हेतुत्वात् = शाब्दबोधसामान्ये कारणत्वात् । अन्यथेति । तादृशपदजन्यपदार्थोपस्थितेरहेतुत्वे इत्यर्थः । शाब्दज्ञानप्रसङ्गात् = शाब्दबोधापत्तेः । शब्दधर्मिकतादृशासेच्छाविषयत्वज्ञानं न शाब्दबोधे कारणं, मानाभावात् । न च नानार्थस्थले एकार्थमात्रविषयकशाब्दबोधनिर्वाहाय तादृशज्ञानस्य शाब्दहेतुत्वमावश्यकमिति वाच्यम् । तत्तत्प्रकरणादीनां शाब्दबोधहेतुत्वोपगमादेव नानार्थस्थले एकार्थमात्रविषयकशाब्दबोधनिर्वाहसम्भवादिति तु सुधीभिर्विभावनीयम् ।

दीपिका

'पङ्कजा'दिपदेषु—योगरूढिः। अवयवशक्तिर्योगः, समुदायशक्ती रूढिः। नियतपद्मत्वज्ञानार्थं समुदायशक्तिः, अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः॥ 'इतरान्विते शक्तिरि'ति प्राभाकराः॥

विवृतिः

यौगिकस्य पाचकादिशब्दस्यावयवशक्त्या बोधकस्य, शक्तस्य समुदायशक्त्या बोधकस्य गवादिपदस्य सुप्रसिद्धतया तयोर्निर्वचनं परित्यज्य बहुवादिविप्रतिपत्तिकं योगरूढं नाम निर्वक्ति—पङ्कजादीति। आदिपदात् अश्वगन्धादि-परिग्रहः। अवयवशक्तिः = प्रकृतिप्रत्ययादीनां शक्तिः। समुदायशक्तिः = प्रकृतिप्रत्ययालभ्यार्थनिरूपिता शक्तिः। तथा च पङ्कजादिपदम् अवयवशक्त्या पङ्कजनिकर्तृत्वावच्छिन्नं, समुदायशक्त्या च पद्मत्वावच्छिन्नं, बोधयतीति अवयवार्थं परित्यज्य न समुदायार्थस्य, समुदायार्थं परित्यज्य च नाऽवयवार्थस्य ततो बोध इति न्यायसिद्धान्त इति भावः। नियतपद्मत्वज्ञानार्थं = पङ्कजनिकर्तृत्वेन पद्मत्वावच्छिन्नबोधार्थं, अन्यथा = समुदायशक्त्यस्वीकारे। कुमुदेऽपि प्रयोगप्रसङ्गः = पङ्कजशब्दात् पङ्कजनिकर्तृत्वेन कुमुदबोधप्रसङ्गः, तादृशबोधमादाय 'पङ्कजं कुमुद'मिति प्रयोगप्रसङ्गो वा। वस्तुतो रूढ्यप्रतिसंधानदशायां केवलावयवशक्त्या पङ्कजादिपदात् कुमुदस्याऽपि बोधः, एवं अवयवशक्त्यप्रतिसंधानदशायाञ्च केवलसमुदायशक्त्या स्थलकमलस्याऽपि बोधः सम्भवतीति ध्येयम्॥ केचित्तु रूढयौगिकमप्यधिकं नाम, येन योगार्थं परित्यज्य रूढ्यर्थस्य बोधः, रूढ्यर्थं परित्यज्य च योगार्थस्यापि बोधः, यथा 'मण्डपे शेते' इत्यादौ रूढ्यर्थस्य केवलगृहादेः, 'मण्डपं भोजये'त्यादौ च अवयवार्थस्य केवलमण्डपानकर्त्रादेर्बोधो भवतीति वदन्ति॥ पदार्थद्वयसम्बन्धस्य शाब्दबोधविषयतया तादृशसम्बन्धेऽप्यवश्यं शक्तिरङ्गीकर्त्तव्या, वृत्त्यनुपस्थितस्य शाब्दबोधे भानानभ्युपगमात्, तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितेर्हेतुत्वादिति मतं दूषयितुमुपन्यस्यति—इतरान्विते इति। इतरत्वं सम्पातायातं, अन्विते

आकांक्षा, योग्यता, संनिधिश्च, वाक्यार्थज्ञाने हेतुः । पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम्—

दीपिका

'अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्न कल्पनीया'—इति गौतमीयाः ॥

आकाङ्क्षेति । आकाङ्क्षादिज्ञानमित्यर्थः । अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दभ्रमो न स्यात् । आकाङ्क्षां लक्षयति—पदस्येति ।

विवृतिः

घटादौ घटपदशक्तिरिति तु ज्यायः । तथा च अन्वितो घटो घटपदशक्य' इत्याकारकशक्तिज्ञानादेवाऽन्वयविषयकशाब्दबोध इति भावः । सिद्धान्तिमतमाह—अन्वयस्येति । पदार्थद्वयसंसर्गस्येत्यर्थः । वाक्यार्थतया = साकांक्षवाक्यज्ञानप्रयोज्यविषयताश्रयतया । भानसम्भवात् = शाब्दबोधविषयत्वसम्भवात् । तथा च शाब्दबोधीयपदार्थद्वयसंसर्गविषयताया आकांक्षाज्ञानप्रयोज्यतया न तादृशसम्बन्धे शक्तिः कल्पनीयेति भावः । गौतमीयाः = नैयायिका वदन्तीति शेषः । नचैवं शाब्दबोधेऽबाधितयावत्सम्बन्धभानं स्यादिति वाच्यम् । तात्पर्यज्ञानस्यैव तत्तत्संसर्गभानप्रयोजकतया तादृशापत्त्यसम्भवात्, तादृशसंसर्गविषयकतात्पर्यज्ञानसत्त्वे च तादृशभानस्येष्टत्वादिति संक्षेपः ॥ मूले-पदस्येति । निष्ठत्वं षष्ठ्यर्थः, तथा

न्यायबोधिनी

आकाङ्क्षां लक्षयति—पदस्येति । अव्यवहितोत्तरत्वादिसंबन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्द-

---

अव्यवहितोत्तरत्वादीति । आदिना—अव्यवहितपूर्वत्वसम्बन्धपरिग्रहः । तादृशोत्तरत्वसम्बन्धेन 'अम्' पदे घटपदवत्त्वं, तादृशपूर्वत्वसम्बन्धेन घटपदे 'अम्'पदवत्त्वमाकाङ्क्षा ज्ञातव्या ॥

आकांक्षा। अर्थाबाधो—योग्यता। पदानामविलम्बेनोच्चारणं-

दीपिका

योग्यतालक्षणमाह—अर्थेति। सन्निधिलक्षणमाह-पदानामिति।

विवृतिः

व पदनिष्ठा या स्वभिन्नपदाभावप्रयुक्तशाब्दबोधाजनकता सैवाऽऽकांक्षेत्यर्थः। वस्तुतः प्रकृतिप्रत्ययादीनां पूर्वोत्तरभावो प्रत्ययान्तानां समभिव्याहारो वाऽऽकांक्षा, तज्ज्ञानस्यैव शाब्दबोधजनकत्व मित्यवधेयम्। अर्थाबाध इति। एकपदार्थेऽपरपदार्थाभावाभाववत्त्वं योग्यतेत्यर्थः। पदानामिति। साकांक्षपदानामित्यर्थः। अविलम्बेनोच्चारणम् = अविलम्बितोच्चारणप्रयुक्त-सन्निधिज्ञानं शाब्दकारणम्। 'गौरश्व'इत्यादिकमुपलक्षणं, वस्तुतो—'घटः कर्मत्वमानयनं कृति'रित्यादिकमेव निराकांक्षं वाक्यं बोध्यम्। योग्यताविरहादिति। सेकपदार्थेऽग्निकरणकत्ववत्त्वरूपाया योग्यताया विरहादित्यर्थः। साम्निध्याभावादिति। पदानां सन्निहितत्वज्ञानविरहा-

न्यायबोधिनी

बोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकांक्षा। यथा—'घटमि'त्यादिस्थलेऽव्यवहितोत्तरत्वादिसंबन्धेन'अम्'पदं 'घट' पद-वदित्याकारकाम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे 'घटीयं कर्मत्वमि'ति बोधो जायते। 'अम्—घट' इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते। अतस्तादृशाकांक्षा-ज्ञानं शाब्दबोधे कारणम्। अर्थाबाध इति। बाधाभावो—योग्यते-त्यर्थः। 'अग्निना सिञ्चे'दित्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः। संनिधिं निरूप-यति—पदानामिति। असहोच्चारितानि= बिलम्बोच्चारितानि॥

---

तादृशवाक्यात्—'अग्निना—सिञ्चेदि'ति वाक्यात्।

संनिधिः। तथा च आकांक्षादिरहितं वाक्यमप्रमाणम्, यथा—'गौरश्वः-पुरुषो हस्ती'ति न प्रमाणम्, आकांक्षा-विरहात्। 'वह्निना सिञ्चेदि'ति न प्रमाणं, योग्यताविरहात्।

दीपिका

अविलम्बेन पदार्थोपस्थितिः—सन्निधिः। उच्चारणं तु तदुपयोगितया उक्तम्। 'गौः-अश्व'इति। घटः कर्मत्वमित्यप्यनाकांक्षोदाहरणं द्रष्टव्यम्॥

विवृतिः

दित्यर्थः। स्वरूपसदाकांक्षायाः शाब्दहेतुत्वं न युक्तिसहमित्याह—दीपिकायां आकांक्षाज्ञानमिति। अन्यथेति। अज्ञायमानाया वस्तुभूताया आकांक्षाया शाब्दहेतुत्वे इत्यर्थः। न स्यादिति। तथा च 'घट'इत्यत्र घटपदाव्यवहितोत्तरा-'ऽम्'पदत्वभ्रमदशायां 'कर्मत्वं घटीय'मित्याकारक-शाब्दबोधस्यानुभविकतया अज्ञायमानाकांक्षाया हेतुत्वे तादृशशाब्दबोधो न सम्भवतीति हृदयम्। पदार्थोपस्थितिरिति। यत्पदार्थेन सह यत्पदार्थस्यान्वयबोधः तयोरव्यवधानेनोपस्थितिरित्यर्थः। नन्वेवं मौल-मुच्चारणपदं निरर्थकमित्याह—उच्चारणमिति। तदुपयोगितया = तादृशोपस्थित्युपयोगितया। उच्चारणोच्चार्यमाणयोरभेदविवक्षयेदमिति ध्येयम्। निराकांक्षस्य दृष्टान्तान्तरमाह-घट-इति। मूले वैदिक-मिति। ईश्वरोक्तं वैदिकमित्यर्थः। लौकिकम् = ईश्वरभिन्नोक्तम्। आप्तोक्तम् = वाक्यार्थयथार्थज्ञानवता उक्तम्। अन्यत् = वैदिकाप्तोक्ताभ्यां

न्यायबोधिनी

वैदिकमिति। वेदवाक्यमित्यर्थः। इदमुपलक्षणम्-वेदमूलक-स्मृत्यादीन्यपि ग्राह्याणि। लौकिकं त्विति। वेदवाक्यभिन्न-

प्रहरे प्रहरेऽसहोच्चारितानि 'गामानये'त्यादिपदानि—न प्रमाणं, सांनिध्याभावात् ॥

वाक्यं द्विविधम्, वैदिकं, लौकिकं च। वैदिकमीश्व-

दीपिका

वाक्यं विभजते-वाक्यमिति। वैदिके विशेषमाह-वैदिक-मीश्वरोक्तत्वादिति ॥

ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमिति चेत्? 'वेदः—

विवृतिः

भिन्नं वाक्यम्। वाक्यार्थज्ञानमिति। पदार्थयोः परस्परसम्बन्धज्ञान-मित्यर्थः। शाब्दज्ञानं = शाब्दबोधात्मको निश्चयः। तत्करणम् = शाब्द-ज्ञानकरणम्। शब्दः = शब्दज्ञानम्। दीपिकायामाक्षिपति—नन्विति। अनादित्वात् = स्वसजातीयध्वंसव्यापकप्रागभावप्रतियोगि यत् तदन्य-त्वात्, साजात्यं स्वप्रतियोगिवर्णवृत्तिजात्यवच्छिन्नप्रतियोगिकत्वेन रूपेण, स्वं = ध्वंसः। कथं = केन प्रकारेण। समाधत्ते—नेति। वेद इति पक्षः, वैदिकवाक्यसमूहत्वावच्छिन्न इति तदर्थः। पौरुषेयः = पुरुषोच्चरितः। अत्र पुरुषोच्चरितत्वं साध्यम्। वाक्यसमूहत्वात् = वाक्यत्वात् इति हेतुनिर्देशः। भारतादिवदिति दृष्टान्तानुसरणम्। तथा च महाभारतस्य वाक्यसमूह-रूपस्य यथा पौरुषेयत्वं, तथा वेदस्यापि वाक्यसमूहरूपत्वात् पौरुषेयत्व-मुपगन्तव्यम्, इतरपुरुषोच्चरितत्वस्य वेदे बाधितत्वेन ईश्वरोच्चरितत्वस्यो-

न्यायबोधिनी

मित्यर्थः। आप्तत्वं च = प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्।

❀ इति न्यायबोधिन्यां शब्दपरिच्छेदः ❀

---

प्रयोगेति। प्रयोगः = शब्दोच्चारणम्, तस्य हेतुभूतं=कारणीभूतं यत्, यथार्थज्ञानं तद्वत्त्वमाप्तत्वमित्यर्थः।

रोक्तत्वात्सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम्, अन्यदप्रमाणम् ॥

**वाक्यार्थज्ञानं–शाब्दज्ञानम्, तत्करणं–शब्दः ॥**

### दीपिका

पौरुषेयः-वाक्यसमूहत्वात्-भारतादिवत्' इत्यनुमानेन पौरुषेयत्वसिद्धेः । न च स्मर्यमाणकर्तृत्वमुपाधिः, गौतमादिभिः शिष्यपरम्परया वेदेऽपि सकर्तृत्वस्मरणेन साधनव्यापकत्वात्, 'तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्त' इति श्रुतेश्च ॥

### विवृतिः

त्वानुमानादेव सिद्धिरित्याशयः । ननु पौरुषेयत्वस्योभयवादिसिद्धस्य महाभारते वर्त्तमानत्वात् तत्र च स्मर्य्यमाणव्यासकर्तृकत्वस्य सत्त्वेन स्मर्य्यमाणकर्तृकत्वस्य पौरुषेयत्वरूपसाध्यव्यापकतया वेदनिष्ठस्य वाक्यसमूहत्वरूपहेतोरव्यापकतया च तस्योपाधित्वात्तादृशस्मर्य्यमाणकर्तृकत्वाभावेन वेदे पौरुषेयत्वाभावस्याऽपि सिद्धिसम्भवात् कुतो वेदे पौरुषेयत्वसिद्धिरित्याह–न चेति । **स्मर्य्यमाणेति** । स्मर्य्यमाणः = स्मरणविषयीभूतः कर्ता यत्र तादृशत्वमित्यर्थः । उत्तरयति–**गौतमादिभिरिति** । आदिपदात् कपिलादिपरिग्रहः । शिष्यपरम्परया = तत्तच्छिष्यपरम्परया । वेदेऽपि = पक्षीभूतवाक्यसमूहेपि । सकर्तृकत्वस्मरणेन=स्मर्य्यमाणकर्तृकत्वस्य सत्त्वेन । साधनव्यापकत्वात् = वाक्यसमूहत्वरूपहेतुव्यापकत्वात् । तथा च साधनाव्यापकस्यैवोपाधितया–स्मर्य्यमाणकर्तृकत्वस्योपाधित्वमेव न सम्भवतीति भावः । वेदस्य पौरुषेयत्वे श्रुतिमपि प्रमाणयति—**तस्मादिति** । तपस्तेपानात् = कृततपःसम्भारात् । अजायन्त = उत्पद्यन्ते ।

वर्णानां नित्यत्वे तद्घटितवाक्यानामपि नित्यत्वं स्यात्–वर्णानां नित्यत्वञ्च 'सोऽयं गकार' इति प्रत्यभिज्ञया निश्चेतव्यम्, तथा च कथं वर्णघटित-

दीपिका

ननु वर्णा नित्याः, 'स एवायं गकार' इति प्रत्यभिज्ञाबलात्, तथा च कथं वेदस्यानित्यत्वमिति चेन्न, 'उत्पन्नो गकारो नष्टो गकार' इत्यादिप्रतीत्या वर्णानामनित्यत्वात्, 'सोऽयं गकार' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत् जात्यावलम्बनत्वात्। वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्याप्यनित्यत्वात्, तस्मात्-ईश्वरोक्तो वेदः, मन्वादिस्मृतीनाम् आचाराणां च वेदमूलकतया प्रामाण्यम्, स्मृतिमूलवाक्यानामिदानीमनध्ययनात् तन्मूलभूता

विवृतिः

वेदवाक्यस्यानित्यत्वमित्याशङ्क्य समाधत्ते—नेति। इत्यादिप्रतीत्या = इत्याकारकप्रत्ययबलेन। ननु यदि वर्णा अनित्यास्तदा कथं 'सोऽयं गकार' इति प्रत्यभिज्ञा इत्यत—आह सोऽयमिति। तथा च यथा पूर्वकालीन-दीपशिखाया असत्त्वेऽपि दीपशिखात्वरूपजातिमादाय 'सेऽयं दीपशिखे'त्याकारकप्रत्यभिज्ञा, तथा पूर्वकालीनगकारस्य विनष्टत्वेऽपि गत्वजाति-मादाय 'सोऽयं गकार'इत्याकारकप्रत्यभिज्ञा गकारादेरुत्पादविनाशशालि-त्वेऽपि सम्भवतीति हृदयम्। तुष्यतु दुर्जन इति न्यायेनाह—वर्णानामिति। आनुपूर्वीविशिष्टवाक्यस्य = अव्यवहितोत्तरत्वादिसम्बन्धेन तत्तद्वर्णविशि-ष्टवाक्यस्य। अनित्यत्वादिति। तथा च विशिष्टस्यानित्यत्वे विशेषणस्य नित्यत्वं कथमपि न सम्भावितम् भवतीति भावः। उपसंहरति—तस्मा-दिति। आचाराणाम्=तत्स्मृतिप्रयोज्यप्रयत्नविशेषादीनां। वेदमूलकतया = वेदजन्यवाक्यार्थज्ञानजन्यतया। प्रामाण्यं = प्रामाण्यग्रहः। मन्वादिस्मृ-तौ सन्दिग्धाप्तोक्तत्वस्य पुरुषस्येति शेषः। इदानीं स्मृतिमूलीभूतानां वेद-वाक्यानामनुपलम्भेऽपि न तेषामभावः कल्पयितुं शक्यते—इत्याह—स्मृतीति। स्मृतिजन्याचारप्रयोजकीभूतानां स्मृतिपूर्ववर्त्तिनां वेदवाक्यानामित्यर्थः।

दीपिका

काचित् शाखोच्छिन्नेति कल्प्यते ।

ननु पाठ्यमानवेदवाक्योत्सादस्य कल्पयितुम् अशक्यतया विप्रकीर्णवादस्यायुक्तत्वात नित्यानुमेयो वेदो मूलमिति चेन्न, तथापि वर्णानुपूर्वीज्ञानाभावेन बोधकत्वासम्भवात् ॥

ननु 'एतानि पदानि–स्मारितार्थसंसर्गवन्ति,–आकाङ्क्षादिमत्पद-

विवृतिः

इदानीं = वर्त्तमानसमये । अनध्ययनात् = अध्ययनस्यादृष्टचरत्वात् । तन्मूलभूता = स्मृतिमूलभूता । काचित् शाखा = वैदिकशाखा । उच्छिन्ना = विनष्टा, कल्प्यते = अनुमीयते । तथा च—'स्मृत्यादयः–अवश्यं वेदमूलकाचारप्रयोजकाः–शिष्टाचारप्रयोजकत्वे सति वाक्यत्वात्' इत्यनुमानेनोपलभ्यमानवेदमूलकाचारप्रयोजकत्वबाधात् अनुपलभ्यमानवेदमूलकाचारप्रयोजकत्वसिद्धिरिति भावः । शाखोच्छेदकल्पनाया अयुक्तत्वमाशंकते–नन्विति । पाठ्यमानेति । पाठ्यमानानि यानि वेदवाक्यानि, तेषामुत्सादस्य = उच्छेदस्येत्यर्थः । विप्रकीर्णवादस्य = अपठ्यमानस्मृतिमूलीभूतवेदभागोच्छेदकल्पनस्य । तर्हि किं स्मृत्यादिमूलीभूतो वेद एव नास्तीत्याह—नित्येति । यतो नित्यो वेदः, अत एवापठ्यमानोऽपि स्मृत्यादिवाक्यसमानार्थको वेदः स्मृतिमूलतयाऽनुमेय इत्यर्थः । तथापीति । अपठ्यमानानुमितवेदस्य स्मृतिमूलत्वस्वीकारेऽपीत्यर्थः । वर्णानुपूर्वीज्ञानाभावेन = अपठ्यमानवेदघटकानुपूर्वीज्ञानाभावेन । बोधकत्वाऽसम्भवात् = स्मृत्यर्थबोधकत्वाऽसम्भवात् । तथा च नित्यस्याऽपि तादृशवेदस्यार्थबोधकत्वाभावेन स्मृत्यर्थबोधकतया स्मृतिमूलकत्वं न सम्भवतीति हृदयम् । शब्दफलं पदार्थद्वयसंसर्गज्ञानं, तस्यानुमानाधीनत्वे शब्दस्य प्रमाणान्तरत्वं न स्वीकर्त्तव्यमिति नव्यवैशेषिकमतं दूषयितुं शङ्कते नन्विति । एतानि पदानि = लौकिकानि वैदिकानि वा वाक्यानि । स्मारितेति । स्मारितयोः पदार्थयोः यः संसर्गः सम्बन्धः

दीपिका

कदम्बकत्वात्, 'गामानय दण्डेनेति-मद्वाक्यव' दित्यनुमानादेव संसर्गज्ञानसम्भवात् शब्दो न प्रमाणान्तरमिति चेन्न। अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य 'शब्दात्प्रत्येमी' त्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात् ॥

विवृतिः

तत्प्रमापूर्वकानीत्यर्थः। स्वविषयकज्ञानाव्यवहितपूर्वत्वसम्बन्धेन तादृशसंसर्गवन्तीति वार्थः। आकांक्षादीति। आकांक्षादिमत्पदकदम्बानि पदसमूहानि यत्र वाक्ये तादृशत्वादित्यर्थः। निराकांक्षवाक्ये व्यभिचारवारणाय आकांक्षादिमत्त्वं पदविशेषणम्। इत्यनुमानादेव = इत्याकारकप्रयोगाधीनव्याप्तिज्ञानादित एव। संसर्गज्ञानसम्भवात् = पदार्थद्वयसंसर्गज्ञानसम्भवात्। शब्दः = शब्दज्ञानं। न प्रमाणान्तरम् = नानुमित्यतिरिक्तविलक्षणप्रमितिकरणम्। दूषयति-नेति। अनुमित्यपेक्षया = अनुमितिरूपविषयपरित्यागेन। शाब्दज्ञानस्य = शाब्दबोधस्य। विलक्षणस्य = अनुमित्यादिभिन्नस्वविशिष्टस्य। शब्दात्प्रत्येमि = शाब्दयामि श्रृणोमीति यावत्। इत्यनुव्यवसायसाक्षिकस्य = इत्याकारकमानसप्रत्यक्षविषयीभूतस्य। सर्वसम्मतत्वादिति। तथा च 'गौरस्ती' ति वाक्यार्थबोधोत्तरम्-'अस्तित्वेन गां श्रृणोमि नत्वनुमिनोमी' त्यनुव्यवसायस्य सर्ववादिसिद्धतया तादृशानुव्यवसायविषयीभूतस्य शाब्दस्य प्रमित्यन्तरत्वे तत्करणमपि भवति प्रमाणान्तरीभूतं पदज्ञानात्मकमिति भावः।

अर्थस्याऽऽपत्तिरर्थापत्तिरिति व्युत्पत्त्या, अर्थस्यापत्तिर्यत इति-व्युत्पत्त्या चार्थापत्तिशब्दः प्रमितिपरः प्रमाणपरश्च, अर्थापत्तिरूपा प्रमितिः उपपादकज्ञानं, तादृशप्रमाणञ्चानुपपत्तिज्ञानं, तथा चोक्तमभियुक्तैः अनुपपत्तिज्ञानेनोपपादकज्ञानकल्पनमर्थापत्तिरिति। अनुपपाद्यस्योपपादकाभावव्यापकीभूताभावप्रतियोगित्वमनुपपत्तिः। एवञ्चानुमानातिरिक्तमर्थापत्तिरूपप्रमाणान्तर-

दीपिका

ननु—'अर्थापत्ति'रपि प्रमाणान्तरमस्ति ? 'पीनो देवदत्तो दिवा न भुङ्क्ते'—इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यते इति चेन्न, 'देवदत्तो—रात्रौ भुङ्क्ते—दिवाऽभुञ्जानत्वे सति पीनत्वात्' इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् ॥

विवृतिः

मवश्यमङ्गीकर्तव्यम्, कथमन्यथा 'पीनोऽयं बटुर्दिवा न भुङ्क्ते' इति वाक्यश्रवणानन्तरं ब्राह्मणे रात्रिभोजनं सिध्यति, अस्माकन्तु पीनत्वनिष्ठभोजनाभावव्यापकाभावप्रतियोगित्वरूपानुपपत्तिज्ञानादेव ब्राह्मणे भोजनकल्पनं निराबाधमेवेति मतं दूषयितुं शङ्कते—नन्विति । प्रमाणान्तरमस्ति = प्रत्यक्षादिचतुष्टयप्रमाणभिन्नप्रमाणमस्ति । दृष्टे = देवदत्तादौ भोजनाभावस्य प्रत्यक्षत्वे । श्रुते वा=तस्य शाब्दबोधविषयत्वे वा । पीनत्वान्यथाऽनुपपत्त्या = भोजनं विना पीनत्वान्यथाऽनुपपत्तिज्ञानेन । रात्रिभोजनं=पीनत्वस्योपपादकं रात्रिभोजनम् । कल्प्यते = निश्चीयते । पीनत्वान्यथानुपपत्तिरवश्यं भोजनाभावव्यापकाभावप्रतियोगित्वरूपा वक्तव्या, अन्यस्य वक्तुमशक्यत्वात्, एवञ्च तादृशप्रतियोगित्वज्ञानं व्यतिरेकव्याप्तिज्ञानं, तज्जन्यं हि भोजनकल्पनमनुमित्यात्मकमेव, व्याप्तिज्ञानकरणकज्ञानस्यैवानुमितित्वादित्यनुपपत्तिज्ञानं नानुमानाद् भिद्यते इत्याशयं मन्यमानः प्रकारान्तरं चाऽनुसरन् नैयायिकसिद्धान्तमाह—देवदत्त इति । रात्रौ भुङ्क्ते = रात्रिभोजनवान् । दिवाऽभुञ्जानत्वे सति = दिवसावच्छेदेन भोजनाभाववत्त्वे सति । पीनत्वात् = स्थूलत्वात् । । दिवामात्रभोजनवत्यपि पीनत्वस्य सत्त्वेन व्यभिचारवारणय सत्यन्तं पीनत्वविशेषणम् । घटादौ व्यभिचारवारणाय-पीनत्वरूपविशेष्यदलं । इत्यनुमानेन = इत्याकारकान्वय्यनुमानेन । सिद्धत्वात् = अनुमितत्वसम्भवात् । इदमापाततः । वस्तुतो 'भोजनाभावव्यापकाभावप्रतियोगि-

दीपिका

'शते पञ्चाशदिति—'सम्भवो'ऽप्यनुमानमेव। 'इह वटे यक्षस्तिष्ठति'—इत्यैतिह्यमप्यज्ञातमूलवक्तृकः शब्द एव॥

चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न मानान्तरम्॥

तस्मात् प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्य्येव प्रमाणानि॥

'ज्ञानानां तद्वति तत्प्रकारकत्वं—स्वतो ग्राह्यं, परतो वे'ति

विवृतिः

पीनत्ववान् देवदत्त' इत्याकारकव्यतिरेकपरामर्शात्। दिवाभोजनबाधसहकृतात् रात्रिभोजनस्याऽपि देवदत्ते सिद्धिसम्भवादर्थापत्तेरतिरिक्तप्रमाणान्तरत्वं निर्युक्तिकमिति ध्येयम्।

असम्भवादीनां प्रमाणान्तरत्वं वदतां मतं निरस्यति—शते-इति। अनुमानमेवेति। न तु ततो भिद्यते इत्याशयः। तथा च 'शतं—अवश्यं पञ्चाशद्विशिष्टं,—तज्ज्ञानापेक्षज्ञानविषयत्वादि'त्यनुमानेन शते पञ्चाशत्—ज्ञानसम्भवात् सम्भवो न प्रमाणान्तरमिति भावः। एवमैतिह्यमपि न प्रमाणान्तरमित्याह—इहेति। अनिश्चितवक्तृकमिदं वाक्यं यदि आप्तोक्तत्वेनाऽनिश्चितं तदाऽप्रमाणमेव, आप्तोक्तत्वेन निश्चितञ्चेत् शब्दान्तर्गतमेवेत्याह—अज्ञातेति। अज्ञातो मूलवक्ता यस्य तादृशः शब्द एवेत्यर्थः। चेष्टा तु मानान्तरं स्यात्? न स्यादित्याह—चेष्टापीति। क्रियाविशेषोऽपीत्यर्थः। शब्देति। तादृशचेष्टया कल्पितशब्दजन्यशाब्दबोधद्वारा, तथाविधहेतुरूपानुमानीभूतचेष्टया अनुमितिद्वारा चेत्यर्थः। व्यवहारहेतुरिति। न तु साक्षात् सा किञ्चित्ज्ञानं सम्पाद्य व्यवहारहेतुरित्याशयः। न मानान्तरम्=न शब्दादितो भिन्नम्। उपसंहरति-तस्मादिति। तथा च न्यायमतमेव सम्यगिति भावः॥

ज्ञानानामिति। घटादिज्ञानानामित्यर्थः। तद्वति=घटत्वादिमति। तत्प्रकारकत्वम्=घटत्वादिप्रकारकत्वं। स्वतोग्राह्यम्=स्वाश्रयविषयकज्ञान-

दीपिका

विचार्य्यते । तत्र विप्रतिपत्तिः—'ज्ञानप्रामाण्यं—तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं, न वा ? अत्र विधिकोटिः—स्वतस्त्वम्, निषेधकोटिः—परतस्त्वम् ॥

विवृतिः

जनकसामग्रीग्राह्यम् । स्वं = तादृशप्रकारकत्वम् । परतोग्राह्यम् = ज्ञातताळिङ्गकानुमितिभिन्नानुमित्यादिसामग्रीग्राह्यम् । विचार्य्यते = विजिगीषोः कथा प्रवर्त्यते । गुरुमिश्रभट्टमतसाधारणीं विचारप्रयोजकसंशयोत्पादिकां विप्रतिपत्तिमाह—तत्रेति । स्वतोग्राह्यत्वे इत्यर्थः । विषयत्वं सप्तम्यर्थः, अन्वयश्चास्य संशयप्रयोजकवाक्यरूपविप्रतिपत्तिपदार्थैकदेशे संशये । ज्ञानेति । ज्ञाननिष्ठं प्रमात्वमित्यर्थः । अत्र ज्ञानपदं घटत्ववति घटत्वप्रकारकज्ञानत्वरूपतत्तत्प्रमात्वस्य पक्षतासूचनाय, अन्यथा घटत्वादिभेदेन प्रमात्वस्य भिन्नतया कस्यापि प्रमात्वस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाऽप्रसिद्धिः स्यात् । तदप्रामाण्येति । प्रामाण्यविरोधिप्रकारतानिरूपिततज्ज्ञाननिष्ठविशेष्यतानिरूपको यो ग्रहस्तदग्राहिका या यावज्ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयीभूतं न वेत्यर्थः ।

अत्र = विप्रतिपत्तौ । विधिकोटिरिति । मीमांसकानामित्यादिः । स्वतस्त्वं = स्वतोग्राह्यत्वं । निषेधकोटिरिति । नैयायिकानामित्यादिः । परतस्त्वं = स्वतोग्राह्यत्वाभावः ॥ गुरुमते सर्वमेव घटादिज्ञानं घटादिज्ञानविषयकं 'अयं घटः घटज्ञानवानहमि'त्याकारकसमूहालम्बनात्मकं भवतीति घटादिज्ञानस्यैव घटादिज्ञानग्रहस्वरूपतया घटादिज्ञानजनकसामग्रीग्राह्यमेव प्रमात्वं, मिश्रमते घटादिज्ञानोत्तरकालीन'घटज्ञानवानहं घटं जानामि वे'त्याकारकानुव्यवसायस्यैव घटादिज्ञानग्रहरूपतया तज्जनकलौकिकमानससामग्रीग्राह्यं प्रमात्वं बोध्यम् । भट्टमते च ज्ञानस्यातीन्द्रियतया तज्जन्यज्ञाततारूपकार्येण 'इयं ज्ञातता, घटादिज्ञानजन्ये'त्याकारकानुमितिजननात्

दीपिका

अनुमानग्राह्यत्वेन सिद्धसाधनवारणाय—यावदिति । 'इदं ज्ञानमप्रमा' इति ज्ञानेन प्रामाण्याग्रहाद् बाधवारणाय—अप्रामाण्याग्राहकेति । 'इदं ज्ञानमप्रमा' इति अनुव्यवसायनिष्ठ-प्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न स्यादतः—तदिति । तस्मिन् = ग्राह्यप्रामाण्याश्रये,—अप्रामाण्याग्राहकेत्यर्थः ।

विवृतिः

तादृशानुमितेरेव घटादिज्ञानग्रहरूपतया तज्जनकपरामर्शादिघटितसामग्रीग्राह्यमेव प्रमात्वमित्यवधेयम् ॥ अनुमानेति । प्रमात्वस्य 'इदं ज्ञानं प्रमे'त्याकारकयत्किञ्चिदनुमितिजनकसामग्रीग्राह्यत्वेनेत्यर्थः । सिद्धसाधनवारणाय = प्रमात्वरूपपक्षे तादृशसामग्रीग्राह्यत्वरूपमीमांसकसाध्यस्य नैयायिकमीमांसकोभयवादिसिद्धतया प्रसक्तस्य सिद्धसाधनरूपदोषस्य वारणाय । यावदितीति । चरमग्रहविशेषणं वक्तव्यमित्याशयः । तथा च तादृशसामग्रीजन्ययावद्ग्रहान्तर्गताऽनुव्यवसायविषयत्वस्य प्रमात्वे नैयायिकैरनभ्युपगमान्न सिद्धसाधनमिति भावः । यावत्पदानुपादाने नैयायिकमते बाधोऽपि दोषः, प्रमात्वे तादृशयत्किञ्चिदनुमितिसामग्रीग्राह्यत्वस्य नैयायिकमतसिद्धतया अभावसाधने पक्षे प्रतियोगिमत्त्वस्यैव बाधस्वरूपत्वादिति ध्येयम् । ज्ञानग्राहकाप्रामाण्याग्राहक—शरीरेन्द्रियजन्ययावद्ग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकत्वरूप—प्रमात्वेऽसत्त्वात् बाधवारणाय—सामग्रीति । तथा च सामग्रीपदेन प्रागभावरूपसामग्रीमादाय तज्जन्ययावद्ग्रहविषयत्वस्य प्रमात्वे सत्त्वात् न बाध इति भावः । इदं ज्ञानं = घटत्वादिप्रकारकं ज्ञानं । अप्रमेति ज्ञानेन = अप्रमेत्याकारकभ्रमजनकीभूतसामग्र्या । प्रामाण्याग्रहात् = तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वरूपपक्षेऽसत्त्वात् । बाधवारणाय = मीमांसकमते बाधवारणाय । अप्रामाण्येति । अप्रामाण्याऽग्राहकत्वं =

दीपिका

उदाहृतस्थले व्यवसाये अप्रामाण्यग्राहकस्याप्यनुव्यवसाये तदग्राहकत्वात् स्वतस्त्वसिद्धिः ॥

ननु स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामि' त्यनु-

विवृतिः

ज्ञानग्राहकसामग्र्यां विवक्षणीयम्। तथा च तादृशाऽप्रामाण्यभ्रमसामग्र्या ज्ञानग्राहकत्वेऽपि अप्रामाण्याग्राहकत्वाऽभावान्न तामादाय बाधः सम्भवतीति हृदयम्। अप्रामाण्याग्राहकत्वं = प्रमात्वविरोध्यग्राहकत्वमित्याशयेन तत्पदप्रयोजनमाह—इदं ज्ञानमिति। जलादौ वन्ह्यादिज्ञानमित्यर्थः। अप्रमेत्यादि। 'तादृशज्ञानमप्रमे'त्याकारको योऽनुव्यवसायस्तन्निष्ठं यत् 'अप्रमात्ववति अप्रमात्वप्रकारकत्व'रूपं प्रामाण्यं तज्ज्ञानजनकस्य मनःसंयोगादेरित्यर्थः। अप्रामाण्याऽग्राहकत्वाभावात् = प्रामाण्यविरोध्यग्राहकत्वाभावात। न स्यादिनि। तथा च तादृशाऽप्रमात्वप्रमात्वग्राहकाऽप्रामाण्याऽग्राहकसामग्र्या एवाऽप्रसिद्धिरिति भावः। तत्पदोपादाने वा कथं तादृशसामग्रीप्रसिद्धिरित्याह—तस्मिन्निति। ग्राह्येति। ज्ञानविषयीभूतं यत्प्रामाण्यं तदाश्रयीभूतं यत्प्राथमिकं ज्ञानं तद्विशेष्यको यः प्रामाण्यविरोधिग्रहस्तदजनकेत्यर्थः। उदाहृतस्थले = 'इदं ज्ञानमि'त्यादिस्थले। व्यवसाये = प्राथमिके जलादौ वन्ह्यादिज्ञाने। अप्रामाण्यग्राहकस्य = 'वह्न्यभाववति वन्हिप्रकारकत्व' ज्ञानजनकीभूतदोषादिघटितसामग्र्याः। अनुव्यवसाये = अप्रमायाः प्रमात्वग्रहे। तदग्राहकत्वात् = अप्रामाण्याग्राहकत्वात्। स्वतस्त्वसिद्धिः=अप्रमायाः प्रमात्वे स्वतोग्राह्यत्वसिद्धिः। वस्तुतस्तदप्रामाण्याऽग्राहकेत्यस्य = तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च या भट्टमतसिद्धा सामग्री तदन्यत्वमर्थस्तेन 'घटज्ञानं गुण' इत्याकारकज्ञानग्राहकशाब्दसामग्र्या प्रमात्वाऽग्रहेऽपि न बाध इति संक्षेपः। अस्तु तर्हि स्वतोग्राह्यमेव प्रमात्वमित्याशङ्कते—नन्विति। स्वत एव = स्वाश्रयग्राहकादेव। गृह्यते =

दीपिका

व्यवसायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात्, व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्, पुरोवर्त्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वात् इति चेन्न। स्वतःप्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा'—इत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात्, अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्। तस्मात् स्वतोग्राह्यत्वाभावात् परतोग्राह्यत्वम्। तथाहि—प्रथमं जलज्ञानानन्तरं प्रवृत्तौ

विवृतिः

ज्ञानविषयीभूतं भवति। कथन्तानिवृत्त्यर्थमाह—घटमित्यादि। 'घटविषयकज्ञानवानह'मित्याकारकानुव्यवसायेनेत्यर्थः। तत्सम्बन्धस्याऽपि=घटघटत्वयोः समवायात्मकसम्बन्धस्यापि, व्यवसायेन यदि घटघटत्वयोर्भानं तदा तयोः सम्बन्धस्यापि भानमवश्यमङ्गीकर्त्तव्यमित्याह—व्यवसायेति। अनुव्यवसायविषयीभूतव्यवसायरूपप्रत्यासत्तेरित्यर्थः। तुल्यत्वात् = विशेषाभावात्। नन्वनुव्यवसाये घटघटत्वयोः सम्बन्धभानेऽपि न प्रमात्वभानमित्यत आह—पुरोवर्तिनीति। घटादावित्यर्थः। प्रकारसंबन्धस्य = घटत्वादिरूपविशेषणसम्बन्धघटितस्यैव। प्रमात्वपदार्थत्वादिति। तथा चानुव्यवसाये घटादौ घटत्वादिसम्बन्धभाने प्रमात्वस्याऽपि भानं भवत्येवेत्याशयः। समाधत्ते—नेति। अनभ्यासदशायां = अपूर्वजलज्ञानोत्तरकाले। प्रमात्वसंशयो न स्यात् = सर्वानुभवसिद्धसंशयोच्छेदप्रसङ्गः स्यात्। कुत ? इत्याकांक्षायामाह—अनुव्यवसायेनेति। 'जलं जानामी'त्याकारकजलज्ञानलौकिकमानसेनेत्यर्थः। प्रमात्वस्य = जलत्ववति जलत्वप्रकारकत्वस्य। निश्चितत्वादिति। तथा च तादृशनिश्चय एव प्रमात्वसंशयं विरुन्ध्यादित्याशयः। उपसंहरति—तस्मादिति। स्वतोग्राह्यत्वाभावात् = ज्ञानग्राहकसामग्रीग्राह्यत्वाभावात्। परतोग्राह्यत्वं = अनुमानादिग्राह्यत्वं। परतोग्राह्यत्वं प्रदर्शयति—तथाहीति। प्रवृत्तौ

दीपिका

सत्त्यां जललाभे सति 'पूर्वोत्पन्नं ज्ञानं–प्रमा-समर्थप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं–यथा अप्रमा'–इति व्यतिरेकिणा प्रमात्वं निश्चीयते। द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते ॥

प्रमाया गुणजन्यत्वम्–उत्पत्तौ परतस्त्वम्। प्रमाऽसाधारणं कारणं-गुणः। अप्रमाऽसाधारणं कारणं-दोषः। तत्र प्रत्यक्षे-विशेष-

विवृतिः

सत्त्यां = प्रवृत्तौ जातायां सत्याम्। पूर्वोत्पन्नं ज्ञानं = 'प्रवृत्तिपूर्वकालोत्पन्नजलज्ञानं'। प्रमा = 'जलत्ववतिजलत्वप्रकारकं'। समर्थप्रवृत्तिजनकत्वात् = सफलप्रवृत्तिजनकत्वात् = जललाभानुकूलप्रवृत्तिजनकत्वादिति यावत्। यन्नैवं = यत् न प्रमात्ववत्। तन्नैवं = तन्न समर्थप्रवृत्तिजनकं। यथाऽप्रमेत्यादिकं व्यतिरेक्युदाहरणं बोध्यम्। इति व्यतिरेकिणा = पूर्वोक्तव्यतिरेकमात्रव्याप्तिमता लिङ्गेन। प्रमात्वं = प्रमात्वरूपं साध्यं। निश्चीयते = अनुमीयते। द्वितीयादिज्ञाने प्रमात्वनिश्चये व्यतिरेकिणो लिङ्गस्य प्रयोजनाभावादाह—द्वितीयादीति। प्राथमिकजलज्ञानोत्तरजायमानद्वितीयादिजलज्ञानेष्वित्यर्थः। पूर्वज्ञानदृष्टान्तेन = प्राथमिकजलज्ञानदृष्टान्तेन। तत्सजातीयत्वलिङ्गेन = पूर्वजलज्ञानसजातीयत्वहेतुना। अन्वयव्यतिरेकिणाऽपि = अन्वयव्याप्तिव्यतिरेकव्याप्त्युभयविशिष्टेन लिङ्गेनाऽपि। गृह्यते = निश्चीयते, प्रमात्वमिति शेषः। तथा चेदं द्वितीयादिजलज्ञानं, प्रमा, 'समर्थप्रवृत्तिजनकत्वात्, प्राथमिकजलज्ञानवत्' इत्यनुमानेन द्वितीयादिजलज्ञाने प्रमात्वं निश्चीयते इति भावः। प्रमाया इति। प्रत्यक्षादिप्रमाया इत्यर्थः। गुणजन्यत्वघटकगुणस्वरूपमग्रे प्रदर्शयिष्यते। प्रमाऽसाधारणकारणं = प्रमात्वावच्छिन्नोत्पादकं। अप्रमाऽसाधारणकारणं = अप्रमात्वावच्छिन्नोत्पादकं। क्रमेण गुणान् प्रदर्शयति- तत्रेति। तासु प्रमासु

दीपिका

णवद्विशेष्यसन्निकर्षो—गुणः। अनुमितौ—व्यापकवति व्याप्यज्ञानम्। उपमितौ-यथार्थसादृश्यज्ञानम्। शाब्दज्ञाने-यथार्थयोग्यताज्ञानम्। इत्याद्यूहनीयम् ॥ पुरोवर्त्तिनि प्रकाराभावस्यानुव्यवसायेनानुपस्थितत्वात् अप्रमात्वं परत एव गृह्यते। पित्तादिदोषजन्यत्वं—उत्पत्तौ परतस्त्वम् ॥

ननु—सर्वेषां ज्ञानानां यथार्थत्वात् अयथार्थज्ञानमेव नास्तीति। न च 'शुक्ताविदं रजतम्'—इति ज्ञानात् प्रवृत्तिदर्शनादन्यथाख्याति-

विवृतिः

मध्ये इत्यर्थः। विशेषणवद्विशेष्यसन्निकर्षः = घटत्वादिमद्घटादौ संयोगादिरूपः सम्बन्धः। गुणः = कारणं। व्यापकवति = साध्यविशिष्टे पक्षे। व्याप्यज्ञानं = व्याप्यप्रकारकज्ञानं, परामर्श इति यावत्। गुण इति पूर्वेणान्वयः। एवमग्रेऽपि। यथार्थसादृश्यज्ञानं = प्रमात्मकसादृश्यज्ञानं। यथार्थयोग्यताज्ञानं = प्रमात्मकं एकपदार्थेऽपरपदार्थवत्ताज्ञानं। इत्यादि = पूर्वोक्तसन्निकर्षादिकम्। ऊहनीयम् = स्वयमिति शेषः। अप्रमात्वस्य स्वतोग्राह्यत्वं सम्भवत्येव नेत्याह—पुरोवर्त्तिनीति। घटादावित्यर्थः। प्रकाराभावस्य = घटत्वाद्यभावस्य। अनुव्यवसायेन = अप्रमानुव्यवसायेन = अनुपस्थितत्वात् = विषयत्वाऽसम्भवात्। अप्रमात्वं = तदभाववन्निष्ठविशेष्यताकत्वविशिष्टतत्प्रकारकज्ञानत्वं। परतः = अनुमानादितः। गृह्यते = निश्चीयते। पीत्तादीति। आदिपदाद्दूरत्वादिपरिग्रहः। उत्पत्तौ = अप्रमाया उत्पत्तौ। परतस्त्वं = अनुमानादिग्राह्यत्वं। गुरुः प्रत्यवतिष्ठते—नन्विति। अयथार्थज्ञानमेव = भ्रमज्ञानमेव। नास्तीति। तथा च शुक्ताविदं रजतमिति ज्ञानं नैकमपि तु ज्ञानद्वयमेव एकं रजतस्य स्मरणं, अपरञ्चेदम्पदार्थस्य प्रत्यक्षात्मकं, एवमन्यत्रापीत्यभिमानः। इदं रजतमिति ज्ञानमेकमेवेत्याशयेन शङ्कते—न चेति। वाच्यमिति परेणान्वयः। प्रवृत्ति-

दीपिका

सिद्धेरिति-वाच्यम् । रजतस्मृतिपुरोवर्त्तिज्ञानाभ्यामेव प्रवृत्ति-सम्भवात्, उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्त्तकत्वेन 'नेदं रजतम्' इत्यादावतिप्रसङ्गाभावादिति चेन्न । सत्यरजतस्थले पुरोवर्त्तिवि-शेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात् ॥

विवृतिः

दर्शनात् = विसंवादिप्रवृत्तिदर्शनात् । अन्यथाख्यातिसिद्धिः = भ्रमसिद्धिः । निराकरोति—रजतेति । रजतस्य स्मरणं पुरोवर्त्तिन इदम्पदार्थस्य यज्ज्ञानं प्रत्यक्षात्मकं ताभ्यामेवेत्यर्थः । प्रवृत्तिसम्भवात् = विसंवादिप्रवृत्तिसम्भवात् । नन्वेवमधिकमित्यादिन्यायात् नेदं रजतमित्याकारकरजतभेदस्मरणेदम्पदार्थ-प्रत्यक्षाभ्यामपि प्रवृत्त्यापत्तिरित्यत आह—उपस्थितेति । स्मरणविषयी-भूतरजतभेदाऽग्रहस्येत्यर्थः । सर्वत्र प्रवर्तकत्वेन = रजतविशेष्यकप्रवृत्ति-जनकत्वेन, शुक्तिविशेष्यकप्रवृत्तिजनकत्वेन च । इत्यादौ = इत्याकारक-ज्ञानोत्तरकाले । अतिप्रसंगाभावात् = प्रवृत्त्यापत्तिवारणसम्भवात् । तथा च निरुक्ताऽभेदग्रहस्यैव भेदग्रहप्रतिबन्धकत्वान्न प्रवृत्त्यापत्तिरिति भावः ।

मीमांसकाऽऽशंकां निरस्यति—नेति । सत्यरजतस्थले = वस्तुभूतरजत-स्थले । पुरोवर्त्तीति । इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकैकज्ञान-स्येत्यर्थः । लाघवेनेति । निरुक्तभेदाग्रहापेक्षयेत्यादिः । रजतार्थिप्रवृत्ति-जनकत्वेन = अवस्तुभूतरजतार्थिप्रवृत्तिजनकत्वेन । विशिष्टज्ञानस्यैव = इद-न्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकज्ञानस्यैव । कल्पनादिति । तथा च इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकप्रवृत्तौ इदन्त्वावच्छिन्नविशेष्यकरज-तत्वप्रकारकज्ञानस्यैव भ्रमप्रमासाधारणतादृशज्ञानत्वेन निश्चयत्वेन वा लाघवात् हेतुत्वं कल्पनीयं विभिन्नहेतुताकल्पने गुरुरूपेणैकहेतुताकल्पने वा गौरवं स्यादित्याशय इत्यास्तां विस्तरः ॥

**अयथार्थानुभवस्त्रिविधः—संशय-विपर्यय-तर्क-भेदात्। एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं-संशयः, यथा—'स्थाणुर्वा पुरुषो वे'ति॥**

दीपिका

अयथार्थानुभवं विभजते-अयथार्थ इति। स्वप्नस्य मानस-विपर्ययरूपत्वात् न त्रैविध्यविरोधः॥ संशयलक्षणमाह-एकेति।

विवृतिः

मूलेऽयथार्थेति। तदभाववति तत्प्रकारकज्ञानात्मकोऽयथार्थ इत्यर्थः। एकस्मिन्निति। एकविशेष्यतानिरूपितविरुद्धभावाभावप्रकारकं ज्ञानं, विरुद्धकोटिद्वयप्रकारतानिरूपितैकविशेष्यताशालिज्ञानं वा संशय इत्यर्थः। दृष्टान्तमाह—यथेति। मिथ्याज्ञानं = तदभाववति तत्प्रकारको निश्चयः। व्याप्येति। व्यापकाभाववत्तया निश्चिते धर्मिणि आहार्यव्याप्यारोपेण आहार्यव्यापकारोपस्तर्क इत्यर्थः। वह्निर्न स्यात् = वह्निमान् न स्यात्। धूमोऽपि न स्यात् = धूमवानपि न स्यात्। तथा च धूमाभावव्याप्यवह्न्य-भाववत्तानिश्चयजन्यधूमवत्तया निश्चिते पर्वतादौ आहार्यधूमाभावारोपस्तर्क इति भावः। दीपिकायां विभजते इत्यस्य पूर्ववदर्थो बोध्यः। स्वप्नमादायाऽ-यथार्थानुभवस्य चतुर्विधत्वशङ्कां निरस्यति—स्वप्नस्येति। मानसविपर्यय-

न्यायबोधिनी

यथार्थानुभवं निरूप्याऽयथार्थानुभवं विभजते—संशयेत्या-दिना। एकेति। एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभाव-

---

एकधर्मेति। तथा च पर्वतो वह्निमान्न वा, वह्निः पर्वतवृत्तिर्न वा,—पर्वतनिष्ठात्यन्ताभावप्रतियोगी न वा, इत्याद्याकारक एव-संशयो निरुक्तधर्मा-वच्छिन्नाविशेष्यताको भावाभावप्रकारकश्च ग्राह्य इति भावः। भावाभावकोटिक-संशयाप्रसिद्धेः—'स्थाणुर्वा पुरुषो वे'—त्याकारकसंशयाऽप्रसिद्धेः'॥

दीपिका

'घटपटा'विति समूहालम्बनेऽतिव्याप्तिवारणाय—एकेति । 'घटो द्रव्यम्'—इत्यादावतिव्याप्तिवारणाय—विरुद्धेति । 'पटत्वविरुद्ध-घटत्ववान्'—इत्यत्राऽतिव्याप्तिवारणाय—नानेति ।

विवृतिः

रूपत्वात् = मानसप्रत्यक्षात्मकमिथ्याज्ञानस्वरूपत्वात् । एकपदप्रयोजनमाह—घटपटाविति । तथा चोक्तसमूहालम्बनज्ञानस्य विरुद्धघटत्वपटत्व-प्रकारकत्वेऽपि तादृशप्रकारताद्वयनिरूपितैकविशेष्यताकत्वस्यासत्त्वान्न तत्राऽतिव्याप्तिः, निरुक्तज्ञानीयघटत्वप्रकारतानिरूपितविशेष्यतावत्त्वस्य घटे पटत्वप्रकारतानिरूपितविशेष्यतावत्त्वस्य पटे सत्त्वात् न काऽपि विशेष्यता-प्रकारताद्वयनिरूपितेति भावः । विरुद्धपदप्रयोजनमाह- घटो द्रव्यमिति । इत्यादौ = इत्याकारकज्ञाने । अतिव्याप्तिवारणाय = निरुक्तज्ञानस्य घटनिष्ठै-कविशेष्यतानिरूपितघटत्वद्रव्यत्वनानाधर्मप्रकारकतया प्रसक्तायाः अति-व्याप्तेर्वारणाय । यद्यप्युक्तज्ञानीयघटत्वप्रकारतानिरूपितविशेष्यतायाः निरव-च्छिन्नतया द्रव्यत्वप्रकारतानिरूपितविशेष्यतायाश्च घटत्वावच्छिन्नतया भिन्नत्वात् न तत्र नानाधर्मप्रकारतानिरूपितैकविशेष्यताकत्वमिति नातिव्या-प्तिरित्युच्यते तथाऽपि 'रूपवान् घटो द्रव्यमि'त्याकारकसमूहालम्बनविलक्षणे ज्ञानेऽतिव्याप्तिर्बोध्येति ध्येयम् । घटत्वद्रव्यत्वादेः विरुद्धत्वाभावान्नाति-व्याप्तिरित्याह विरुद्धेतीति । नानापदप्रयोजनमाह— पटत्वेति । पटत्वविरुद्धं यत् घटत्वं तद्वानयमित्यर्थः । अतिव्याप्तिवारणाय = निरुक्तज्ञानस्यैकविशेष्यतानिरूपितविरुद्धधर्मप्रकारकतया सम्भवदतिव्याप्ते-र्वारणाय । नानापदोपादाने तु निरुक्तज्ञानस्यैकविशेष्यतानिरूपितनानाधर्म-

न्यायबोधिनी

प्रकारकज्ञानं-संशय इत्यर्थः। भावद्वयकोटिकसंशयाऽप्रसिद्धेः, 'स्थाणुर्वे'त्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिक एव ॥

मिथ्याज्ञानं–विपर्ययः, यथा–'शुक्तौ-इदं रजतम्'–इति॥
व्याप्यारोपेण व्यापकारोपस्तर्कः, यथा–'यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादि'ति॥

दीपिका

विपर्य्ययलक्षणमाह-मिथ्येति। तदभाववति तत्प्रकारकनिश्चय इत्यर्थः। तर्कलक्षणमाह-व्याप्येति॥ यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वाद् भेदेन कीर्त्तनम्॥

विवृतिः

प्रकारताकत्वाभावान्नातिव्याप्तिरित्याह-नानेतीति। तदभावेति। तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिनिश्चय इत्यर्थः। शङ्कते–यद्यपीति। तर्कः = मानसत्वव्याप्यजात्यवच्छिन्नः, आपाद्यव्याप्यापादकवत्तानिश्चयजन्यज्ञानस्वरूपो वा। विपर्य्यये इति। तथा च निरुक्ततर्कस्य तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकतया नातिरिच्यतां स विपर्य्ययादिति भावः। अस्तु तावत् तर्को विपर्य्ययस्वरूपस्तथाऽपि तत्र प्रमाणसहकारित्वरूपं किञ्चिद्वैलक्षण्यं अन्यविधविपर्य्ययादस्त्येवेत्याशयेनोत्तरयति–तथापीति। प्रमाणानुग्राहकत्वात् = प्रमाणानां सहकारित्वात्। भेदेनेति। अन्यान्यविपर्य्ययवैलक्षण्येनेत्यर्थ इति दिक्।

न्यायबोधिनी

मिथ्याज्ञानमिति। अयथार्थज्ञानमित्यर्थः। विपर्ययो नाम-भ्रमः॥

व्याप्यारोपेणेति। तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम्। अन्यथा–बाधनिश्चयाभावे इष्टापत्तिदोषेण तर्कानुत्पत्तेः॥

---

तर्के व्याप्यस्येति सम्पातायातम्। व्यापकस्य बाधनिश्चयः = आपाद्यस्य व्यतिरेकनिश्चयः। निरुक्तबाधनिश्चयस्याहेतुत्वे दोषमाह—अन्यथेति॥

स्मृतिरपि द्विविधा—यथार्था, अयथार्था, च ।
प्रमाजन्या—यथार्था, अप्रमाजन्या—अयथार्था ॥
सर्वेषामनुकूलवेदनीयं—सुखम् ॥

दीपिका

स्मृतिं विभजते—स्मृतिरिति ।

सुखं लक्षयति—सर्वेषामिति । 'सुख्यहम्'—इत्याद्यनुव्यवसायगम्यम् सुखत्वादिकमेव लक्षणम्, यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् ॥

विवृतिः

मूले-प्रमाजन्येति। प्रमात्मकानुभवजन्या तादृशज्ञानजन्या वेत्यर्थः। 'एवमप्रमाजन्याऽपि निर्वाच्या'। सर्वेषामिति। 'सुखं मे भूया'दित्याकारकज्ञानविषयीभूतं सुखं, अनुभवसिद्धसुखत्वजात्यवच्छिन्नं वा सुखमित्याशयः। एवं दुःखादिकमपि निर्वाच्यम्। विहितेति। वेदादिविहितकर्मजन्यो

न्यायबोधिनी

सुखं निरूपयति—सर्वेषामिति। 'इतरेच्छाऽनधीनेच्छाविषयत्वमि'ति—निष्कर्षः। यथाश्रुते 'घटोऽनुकूल'इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिरिति—निष्कृष्टलक्षणमुक्तम्, सुखेच्छाधीने भोजनादाव-

---

इतरेच्छेति। स्वविषयकेच्छाभिन्नेच्छाप्रयोज्यत्वाभाववती या स्वविषयकेच्छा तद्विषयत्वं स्वस्मिन् सुखत्वमित्यर्थः। स्वं = सुखत्वेनाभिमतम्। उपायेच्छां प्रत्येवेच्छान्तरस्य कारणतया सुखेच्छाया फलेच्छारूपत्वान्न तस्या इच्छान्तराधीनत्वमिति भावः॥

**प्रतिकूलवेदनीयं—दुःखम् ॥**

**इच्छा—कामः । क्रोधो-द्वेषः । कृतिः—प्रयत्नः ॥**

**विहितकर्मजन्यो—धर्मः । निषिद्धकर्मजन्यस्त्वधर्मः ।**

**बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ॥**

न्यायबोधिनी

तिव्याप्तिवारणाय—इतरेच्छानधीनेतीच्छाविशेषणम्, सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥

दुःखं निरूपयति—प्रतिकूलेति । 'अत्रापीतरद्वेषानधीनद्वेष-विषयत्वमि'ति—निष्कृष्टलक्षणम् । द्वेषविषयत्वमात्रोक्तौ सर्पादावति-व्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणाय—इतरद्वे-षानधीनेति—द्वेषविशेषणम् । सर्पजन्यःदुखादौ द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषाऽजन्यद्वेषविषयत्व-रूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः । फलेच्छा उपायेच्छां प्रति कारणम् । अतः फलेच्छावशादुपायेच्छा भवति । एवं फले द्वेषादुपाये द्वेषः ॥

---

फलेच्छां प्रति फलज्ञानस्य हेतुत्वं प्रदर्शयति—सुखेच्छाया इति ॥

इतरेति । अत्रापि स्वविषयकद्वेषभिन्नद्वेषाप्रयोज्यस्वविषयकद्वेषविषयत्वं लसिन् दुःखत्वम् । स्वं = दुःखत्वेनाभिमतम् ।

सर्पादौ नातिव्याप्तिरिति । सर्पविषयकद्वेषस्य तद्भिन्नदुःखविषयकद्वेष-प्रयोज्यत्वादित्याशयः ॥ फले द्वेषात् = दुःखे द्वेषात् । उपाये द्वेषः = दुःखोपाये द्वेषः ।

संस्कारस्त्रिविधः—वेगो, भावना, स्थितिस्थापकश्चेति । वेगः—पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्या स्मृति-

दीपिका

संस्कारं विभजते—संस्कार इति । संस्कारत्वजातिमान्—संस्कार ॥ वेगस्याश्रयमाह—वेग इति । वेगत्वजातिमान् वेगः ॥

भावनां लक्षयति—अनुभवेति । अनुभवध्वंसेऽतिव्याप्ति-

विवृतिः

धर्मः, वेदादिनिषिद्धकर्मजन्योऽधर्म इत्यर्थः । सुखत्वजातिमात्रस्यैव लक्षणत्वसम्भवे सर्वेषामित्यादेः परिचायकत्वमाह दीपिकायां—सुखमहमिति । वस्तुतो—मूलोक्तलक्षणमेव सम्यक्, अन्यथा लक्षणलक्ष्यतावच्छेदकयोरैक्यप्रसङ्गः—स्यादिति तु विभावनीयम् । मूले पृथिव्यादाविति । पृथिवीजल-तेजोऽनिल-मनःसु वर्तमानस्तदितरेष्ववर्तमान इत्यर्थः । दीपिका तु सुगमा । मूलेऽनुभवेति । अनुभवजन्या या स्मृतिकारणीभूता सा भावनेत्यर्थः । अनुभवजन्यत्वमात्रस्य लक्षणत्वेऽनुभवध्वंसेऽतिव्याप्तिरित्याह दीपिकायाम्—अनुभवेति । तथा चानुभवध्वंसस्यानुभवजन्यत्वेऽपि स्मृतिकारणत्वविरहादेव न तत्रातिव्याप्तिरित्याशयः । नन्वस्तु तर्हि स्मृति-

न्यायबोधिनी

धर्माधर्मौ निरूपयति—विहितेति । वेदविहितेत्यर्थः । निषिद्धेति । वेदनिषिद्धेत्यर्थः ॥

बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मा इत्यर्थः ॥

संस्कारं विभजते—संस्कार इति । भावनां लक्षयति—अनुभवेति । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्ष-

न्यायबोधिनी

णम्। अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनः-संयोगेऽतिव्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम्। आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः। तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वात्, अतः—स्मृतिहेतुत्वोपादानम्, अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः। ( ननु विशिष्टवुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा, यथा दण्डविशिष्टवुद्धिं प्रति दण्डज्ञानस्य, दण्डविशिष्टबुद्धिर्नाम—दण्डप्रकारकवुद्धिः, सा च 'दण्डी पुरुष' इत्याकारिका, नहि दण्डमजानानः 'दण्डी पुरुषः' इति प्रत्येति, एवं च यत्र 'अयं दण्ड' इति प्रत्यक्षं जातं तदनन्तरं 'दण्डी पुरुष' इत्याकारकप्रत्यक्षमुत्पन्नं तत्र 'दण्डी पुरुष' इत्याकारकप्रत्यक्षेऽतिव्याप्तिः, तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं, जनिष्यमाणे 'दण्डी पुरुष' इत्याकारकस्मरणे कारणं च, स्मृतिं प्रत्यनुभवस्य कारणत्वादिति चेत्? अत्र ब्रूमः—अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम्, तथा च दण्डप्रकारकवुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञाननिष्ठकारणतायां न दण्डानुभवत्वमवच्छेदकं दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः। अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति स्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः। भावनायां तु लक्षणमिदं वर्तते, तथाहि—

दीपिका

वारणाय–स्मृतीति । आत्मादावतिव्याप्तिवारणाय–अनुभवेति । स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम् ॥

विवृतिः

कारणत्वमात्रमेव भावनालक्षणमित्यत आह—आत्मादाविति । तथा-चात्मनः ज्ञानमात्रं प्रति कारणतया स्मृतिं प्रत्यपि तस्य हेतुत्वेनातिव्याप्तिः

न्यायबोधिनी

अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम् । अतोऽनुभवत्वावच्छिन्न-कारणतानिरूपितकार्यताश्रयत्वस्य भावनायां सत्त्वात् नाऽसंभवः ॥ नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम्, तद्ध्यनुभवध्वंसेऽतिव्याप्ति-वारणाय प्रागुपात्तम्, नहि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते, तथाहि—ध्वंसत्वावच्छिन्नं प्रति प्रति-योगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः, तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभव-निष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च, न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितका-र्यताश्रयत्वरूपानुभवजन्यत्वविरहादिति चेत् । न । स्मृतावतिव्याप्ति-वारणायैव तदुपादानात्, तथाहि—स्मृतिं प्रत्यनुभव एव कारणं न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटा-नुभवत्वेनैव कारणत्वं न तु घटज्ञानत्वेन, इत्थं चानुभवत्वावच्छि-न्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिः, उक्तविशेषणदाने तु स्मृतेः स्मृतिहेतुत्वाभावात्तद्व्युदासः ॥ )

हेतुः—भावना, आत्ममात्रवृत्तिः। अन्यथाकृतस्य पुनस्तदवस्थापादकः-स्थितिस्थापकः, कटादिपृथिवीवृत्तिः॥ इति गुणाः॥

दीपिका

स्थितिस्थापकं लक्षयति—अन्यथेति। संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः—सामान्यगुणाः। अन्ये रूपादयो-विशेषगुणाः। 'द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमत्त्वम्'—विशेषगुणत्वम्॥

विवृतिः

स्यात् यद्यनुभवजन्यत्वविशेषणं न स्यात्, तत्सत्त्वे चात्मनो नित्यतया अनुभवजन्यत्वविरहेण न तत्रातिव्याप्तिरिति भावः। अनुभवाधीनसंस्कारविनाशानन्तरं स्मृतितोऽपि स्मृत्युत्पाददर्शनात् ज्ञानमात्रमेव संस्कारं प्रति कारणमिति दीधितिकाराद्यनुमतं प्रदर्शयति—स्मृतेरपीति। उक्तम् = प्रोक्तमिति संक्षेपः।

मूले—अन्यथेति। अन्यथाकृतस्य वस्तुनः पुनस्तदवस्थापादकः = पुनः पूर्वावस्थासंपादक इत्यर्थः। कटादीति। आदिना वृक्षादिपरिग्रहः। दीपिकायां विशेषगुणलक्षणमाह—द्रव्येति। द्रव्यविभाजकीभूतं यत् पृथिवीत्वजलत्वादिद्वयं, प्रत्येकं तदधिकरणे वर्तमाना ये गुणादयः = संयोगादयस्तदवृत्तिजातिमत्त्वमित्यर्थः। तादृशजातिमन्तश्च रूप-रस-गन्ध-स्पर्श-स्नेह—सांसिद्धिकद्रवत्व—शब्द—बुद्धि—सुख—दुखेच्छा—द्वेष—प्रयत्न—धर्माधर्म-भावनाख्यसंस्काराः बोध्याः। समानाधिकरणरूपादौ रूपत्वादेर्वर्तमानत्वादसम्भववारणाय तादृशद्वयान्तं। नीलत्वघटत्वरूपोपाधिद्वयसमानाधिकरणे नीलादौ रूपत्वस्य सत्त्वादव्याप्तिवारणाय द्रव्यविभाजकेति। तत्संयोगव्यक्तित्वमादाय तत्रातिव्याप्तिवारणाय-जातिपदमिति ध्येयम्। न चैकत्वत्वजातिमादायैकत्वेऽतिव्याप्तिः, एकत्वस्याऽपि तादृशोपाधिद्वयाऽसमानाधिकर-

चलनात्मकं-कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरस्य संनिकृष्टसंयोगहेतुराकुञ्चनम् । शरीरस्य विप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं-गमनम् ॥

नित्यमेकमनेकानुगतं-सामान्यम्, द्रव्यगुणकर्मवृत्ति,

दीपिका

कर्मणो लक्षणमाह-चलनेति । उत्क्षेपणादीनां कार्य्यभेदमाह-ऊर्ध्वेति। शरीरेति। वक्रतासम्पादकं कर्म-आकुञ्चनम्। ऋजुतासम्पादकं-प्रसारणमित्यर्थः ।

सामान्यं लक्षयति-नित्यमिति । संयोगेऽतिव्याप्तिवारणाय

विवृतिः

णत्वादिति वाच्यम्। तदन्यत्वस्य जातौ विवक्षणीयत्वात् । वस्तुतो द्रव्यविभाजकेत्यादिकमुपलक्षणम्, काल-दिग्-वृत्तितानवच्छेदकजातिमद्गुणानामेव लाघवाद्विशेषगुणत्वं वाच्यमिति वदन्ति ।

॥ इति दीपिकाविवृतौ गुणनिरूपणम् ॥

## ( अथ कर्मनिरूपणम् )

मूले चलनात्मकमिति । तथा च 'चलती'तिप्रतीत्यसाधारण—कारणतावच्छेदकजातिमत्त्वं कर्म्मत्वमिति भावः। ऊर्ध्वेति। ऊर्ध्वदेशसंयोगजनिका क्रिया उत्क्षेपणमित्यर्थः । एवमग्रेऽपि । ननु भ्रमणादिकमप्यतिरिक्तं कर्म कुतो नोक्तमित्यत आह—अन्यदिति । तथा च तेषां गमने एवान्तर्भावान्नातिरिक्तत्वमिति भावः। दीपिकायां—वक्रतेति । वक्रतोत्पादप्रयोजकं कर्मेत्यर्थः । एवमग्रेऽपि ।

## ( अथ जातिनिरूपणम् )

मूले-नित्येति । नित्यं सत् अनेकेषु समवायेन वर्त्तमानं यत् तत्

परं सत्ता, अपरं द्रव्यत्वादि ॥

दीपिका

नित्यमिति। जलपरमाणुगतरूपे अतिव्याप्तिवारणाय-एकेति। परमाणुपरिमाणादावतिव्याप्तिवारणाय-अनेकेति। अनुगतत्वं=समवेतत्वम्, घटाद्यत्यन्ताभावो घटाद्यनुगतोऽप्यसमवेत इति नाभावादावतिव्याप्तिः ॥

विवृतिः

सामान्यं जातिरित्यर्थः। परं = परमेव। संयोगस्य द्विष्ठतया समवायेनाऽनेकवर्तमानत्वात् तत्रातिव्याप्तिवारणाय नित्यपदं सार्थकयति दीपिकायां संयोगे—इति। नित्यमिति। तथा च संयोगस्य नित्यत्वाभावान्न तत्रातिव्याप्तिरिति भावः। अत्र नित्यत्वं ध्वंसाप्रतियोगित्वमात्रं प्रागभावाप्रतियोगित्वमात्रं वा बोध्यम्। एकमात्रसमवेतपरमाणुपरिमाणस्य गगनपरिमाणस्य च नित्यतया तत्रातिव्याप्तिरतः अनेकसमवेतत्वं वक्तव्यं, तच्च

न्यायबोधिनी

सामान्यं निरूपयति—नित्यमेकमिति। नित्यत्वे सत्यनेकसमवेतत्वं—सामान्यलक्षणम्। नित्यत्वविशेषणानुपादानेऽनेकसमवेतत्वस्य संयोगादौ सत्त्वात्तत्रातिव्याप्तिस्तद्वारणाय नित्यत्वविशेषणम्। अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्तिस्तद्वारणायाऽनेकसमवेतत्वम्। अनेकसमवेतत्वानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ जलपरमाणुगतरूपादौ चातिव्याप्तिः, जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात् अनेकेति समवेतविशेषणम् ॥

सामान्यमिति। जातिमित्यर्थः। अन्यत् सर्वं दीपिकाव्याख्यायां द्रष्टव्यम् ॥

नित्यद्रव्यवृत्तयो व्यावर्तका–विशेषाः ॥

नित्यसंबन्धः–समवायः, अयुतसिद्धवृत्तिः । ययोर्द्व-

दीपिका

विशेषं लक्षयति-नित्येति ।

समवायं लक्षयति-नित्येति । संयोगेऽतिव्याप्तिवारणाय

विवृतिः

नोक्तपरिमाणस्य, गगनादेरेकत्वादित्याह—परमाण्विति । अनेकानुगतत्वं यदि अनेकनिरूपितसम्बन्धसामान्यावच्छिन्नवृत्तित्वं तदा घटाभावेऽति-व्याप्तिः, तत्रापि घटपटाद्यनेकनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तितायाः सत्त्वात् तस्य नित्यत्वाच्चाऽतोऽनेकानुगतत्वं अनेकसमवेतत्वं वक्तव्यं, इति न घटाभावेऽतिव्याप्तिस्तस्यानेकघटादौ समवायेनावर्त्तमानत्वादित्याह—अनुगतत्वमिति । समवेतत्वं = समवायावच्छिन्नवृत्तित्वम् । घटाद्यनुगतोऽपि = घटादौ स्वरूपेण वर्त्तमानोऽपि । असमवेतः = न समवायेन वर्त्तमानः ।

## ( अथ विशेषपदार्थनिरूपणम् )

विशेषपदार्थाऽस्वीकारे धान्यादिपरमाणुतो मुद्गादीनां, मुद्गादिपरमाणुतो धान्यादीनामुत्पादः स्यात्, परमाणूनां भेदकाभावादतो धान्याद्युत्पाद-नियामकान् परमाण्वादिभेदकान् विशेषपदार्थानाह—मूले–नित्येति । तथा च नित्यत्वे सति नित्यद्रव्यवृत्तित्वे च सति व्यावर्त्तकत्वं—विशेषत्व-मिति विशेषलक्षणमिति भावः । वस्तुतो जाति–जातिमद्भिन्नत्वे सति समवायेन यो वृत्तिमान् स विशेषः स च पृथिवीजलतेजोऽनिलपरमाणुषु, कालाकाशदिगात्ममनःसु च वर्त्तते इति–ध्येयम् ।

## ( अथ समवायनिरूपणम् )

मूले नित्येति । तथा च नित्यत्वे सति सम्बन्धत्वं–समवायत्वमिति

योर्मध्ये एकमविनश्यत्तदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ, यथा—अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये, चेति ॥

दीपिका

नित्येति । आकाशादावतिव्याप्तिवारणाय-सम्बन्ध इति । अयुतसिद्धलक्षणमाह-ययोरिति । "नीलो घटः' इति विशिष्टप्रतीतिः—विशेषणविशेष्यसम्बन्धविषया—विशिष्टप्रत्ययत्वात्, दण्डीति प्रत्ययवदि'ति समवायसिद्धिः । अवयवावयविनाविति । द्रव्यसमवायिकारणं—अवयवः, तज्जन्यं द्रव्यमवयवि ॥

विवृतिः

समवायलक्षणं पर्य्यवसितम् । अयुतेति । असम्बद्धयोरविद्यमानत्वमयुतसिद्धिस्तद्वानयुतसिद्धस्तत्र वर्तमानः समवाय इत्यर्थः । असंबद्धयोरपि श्येनशैलयोर्विद्यमानत्वात् श्येनशैलादिसम्बन्धस्य संयोगादेर्युतसिद्धवृत्तित्वमपि तु घटरूपादिसम्बन्धस्यैव तथात्वं असम्बद्धयोर्घटरूपयोरविद्यमानत्वादित्याशयवानाह—ययोरिति । द्रव्यगुणयोर्द्वयोर्मध्ये—इत्यर्थः । एकं = गुणादिकम् । अविनश्यत् = अविनष्टं सत् । अपरा-

न्यायबोधिनी

समवायं निरूपयति—नित्येति । संबन्धत्वं = विशिष्टप्रतीतिनियामकत्वम् । तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो नित्य इति विशेषणम् । ( ययोर्द्वयोर्मध्य इति । यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्तरत्वमयुतसिद्धत्वमित्यर्थः ॥ )

---

नित्य इतीति । संयोगस्य विनष्टत्वादुत्पन्नत्वाच्च न नित्यत्वमिति भावः ॥

**अनादिः सान्तः—प्रागभावः, उत्पत्तेः पूर्वं कार्यस्य ॥**

दीपिका

प्रागभावं लक्षयति-**अनादिरिति**। आकाशादावतिव्याप्ति-

विवृतिः

श्रितमेव = द्रव्याद्याधारमवलम्ब्यैव न तु तं परित्यज्येति यावत्। तिष्ठते= वर्तते। तौ = द्रव्यगुणादी। तौ कौ इत्याकांक्षायामाह—**अवयवेति**। नित्यपदप्रयोजनमाह दीपिकायां— **संयोगे-इति**। तथा च तस्य सम्बन्धत्वेऽपि नित्यत्वाभावान्न तत्रातिव्याप्तिरिति भावः। आकाशस्य नित्यत्वेऽपि सम्बन्धत्वाभावान्न तत्राऽतिव्याप्तिरित्याह—**सम्बन्ध इतीति**। विशिष्टप्रतीतिः = नीलत्वविशिष्टघटविषयकप्रत्यक्षप्रतीतिः। **विशेषणेति**। विशेषणविशेष्ययोर्यः सम्बन्धः स एव विषयो यत्र तादृशीत्यर्थः। अत्र तादृशविषयत्वं साध्यं, तदनुमापकहेतुमाह—**विशिष्टेति**। विशेषण—विशिष्टविशेष्यविषयकज्ञानत्वादित्यर्थः। दृष्टान्तमाह-**दण्डीति**। दण्डविशिष्टपुरुषविषयकप्रत्यक्षवदित्यर्थः। **समवायसिद्धिरिति**। इतरसम्बन्धबाधात् समवायस्यैव सिद्धिरित्यर्थः। अवयवपदार्थमाह— **द्रव्येति**। तज्जन्यं = तादृशावयवजन्यम्।

॥ इति दीपिकाविवृतौ समवायनिरूपणम् ॥

## अथाऽभावनिरूपणम्

**मूले-अनादिरिति**। स्वनिरूपितप्रतियोगिताशून्य इत्यर्थः। साऽन्तः = ध्वंसप्रतियोगितावान्। यस्याभावः सः—प्रतियोगी। तथा च स्वनिरूपितप्रतियोगिताशून्यो ध्वंसप्रतियोगितावाँश्च योऽभावः स प्रागभाव इति भावः। स्वं—लक्ष्यत्वेनाभिमतोऽभावः। स चाऽभावो 'घटो भविष्यति-पटो भविष्यति' इत्याकारकप्रतीतिसिद्धः सम्बन्धानवच्छिन्नप्रतियोगिताकः प्रतियोगिस्वरूपं कार्यं जनयित्वा विनश्यतीत्यपि बोध्यम्। 'उत्पत्तेः'

दीपिका

वारणाय—सान्त इति। घटादावतिव्याप्तिवारणाय—अनादि-

विवृतिः

रित्यस्य 'कार्यस्ये'त्यनेनान्वयो बोध्यः, तथा च कार्यस्योत्पत्तेः पूर्वं प्रागभावो वर्त्तते, उत्तरकाले च विनश्यतीत्याशयः। सादिरिति। प्रागभावप्रतियोगितावानित्यर्थः। अनन्तः = स्वनिरूपितप्रतियोगिताशून्यः। तथा च प्रागभावप्रतियोगितावान् स्वनिरूपितप्रतियोगिताशून्यश्च योऽभावः स प्रध्वंस इति भावः। अत्रापि स्वं = लक्ष्यत्वेनाभिमतोऽभावः। अयमभावः सम्बन्धानच्छिन्नप्रतियोगिताकः 'घटो नष्टः–पटो नष्ट'इत्याकारकप्रतीतिसिद्धो ज्ञेयः। कार्यस्योत्तरकाले मुद्गरप्रहारादिना घटादेर्विनाशो वर्त्तते, न तु कार्यस्य पूर्वकालेऽपि सोऽस्तीत्याह—उत्पत्तेरिति। त्रैकालिकेति। त्रैकालिको = नित्यो यस्तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः सोऽत्यन्ताभाव इत्यर्थः। स चाऽभावो 'घटो नास्ति पटो नास्ती' त्याकारकप्रतीतिसिद्धः प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टस्याऽधिकरणं परित्यज्याऽन्यत्र सर्वत्र वर्त्तते। येन सम्बन्धेनाऽभावो धर्त्तव्यः, स प्रतियोगितावच्छेदकसम्बन्धः, प्रतियोग्यंशे विशेषणीभूतो धर्मः = प्रतियोगितावच्छेदकधर्मः, यथा 'संयोगेन घटो नास्ती' त्यादौ संयोगः प्रतियोगितावच्छेदकसम्बन्धः, घटत्वञ्च प्रतियोगितावच्छेदकधर्मात्मकमिति वेदितव्यम्। दृष्टान्तमाह—यथेति। अधिकरणविनिर्मोकेण 'नञ्' पदोल्लेखिप्रत्ययस्याऽनभ्युपगमादाह—भूतल इति। तादात्म्येति। स्वस्मिन् स्वसम्बन्धितानियामकसम्बन्धस्तादात्म्यं, तथाचोक्तमभियुक्तैः—स्वस्मिन् स्ववृत्तिनियामकसम्बन्धस्तादात्म्यमिति। तथा च घटादौ घटादेर्यस्तादात्म्यात्मकः सम्बन्धः तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावो भेदो वेत्यर्थः। स च 'घटो न पटो ने'त्याकारकप्रतीतिसिद्धः प्रतियोगितावच्छेदकीभूतघटत्वादिमद्घटादिकं परित्यज्यान्यत्र सर्वत्र वर्त्तते। तथा चात्यन्ताभावः प्रतियोग्यधिकरणे न वर्त्तते, अन्योऽन्याभावश्च प्रतियोगिता-

सादिरनन्तः-प्रध्वंसः, उत्पत्त्यनन्तरं कार्यस्य ॥

दीपिका

रिति । प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः-'भ-

विवृतिः

वच्छेदकवति प्रतियोगिनि न वर्त्तते इति भावः । दृष्टान्तमाह—यथेति । नञाऽन्योऽन्याभावबोधने प्रतियोगिवाचकपदसमानविभक्तिकानुयोगिवाचकपदोपस्थाप्यत्वस्य प्रयोजकतयाऽऽह-घट इति । अनादित्वविशिष्टाभावत्वस्य प्रागभावलक्षणत्वे आकाशस्याप्यभावाभावरूपतया तत्राऽतिव्याप्तिवारकतया सान्तपदं सार्थकयति दीपिकायां—आकाशादाविति । आदिपदादात्मादिपरिग्रहः । सान्त इति । तथा च ध्वंसप्रतियोगित्वस्वरूपस्य सान्तत्वस्याऽऽकाशादावभावान्न तत्राऽतिव्याप्तिरिति भावः । घटादाविति । आदिपदात् पटादिपरिग्रहः । अतिव्याप्तिवारणाय = सान्तत्वविशिष्टाभावत्वस्य प्रागुक्तयुक्त्या घटादौ सत्त्वेन प्रसक्ताया अतिव्याप्तेर्वारणाय । अनादीति । तथा च घटादेः सादित्वेन अनादित्वाभावान्न तत्रातिव्याप्तिरिति भावः । यद्वा—अभावत्वाघटितमेव प्रागभावादिलक्षणं, तथा चाऽनादित्वमात्रस्य प्रागभावलक्षणत्वे आकाशादावतिव्याप्तिः, सान्तत्वमात्रस्य तथात्वे घटादावतिव्याप्तिरतः अनादित्वविशिष्टसान्तत्वमेव प्रागभावलक्षणमिति ध्येयम् ।

प्रतियोगीति । प्रतियोगिनो घटादेर्यत् समवायिकारणं कपालादि, तत्र वृत्तिर्वर्त्तमान इत्यर्थः । प्रतियोगिजनकः = घटादिरूपप्रतियोग्युत्पादकः । 'भविष्यती'तिव्यवहारहेतुः = 'भविष्यती'त्याकारकशब्दप्रयोगजनकः । प्रागभावप्रतियोगित्वरूपसादित्वमात्रस्य ध्वंसलक्षणत्वे घटादावतिव्याप्ति स्तस्यापि प्रागभावप्रतियोगित्वादित्याह—घटादाविति । अनन्त इति । तथा च घटादेः सान्तत्वेनानन्तत्वाभावान्न तत्रातिव्याप्तिरिति भावः । नन्वस्तु

त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः,

दीपिका

विष्यती'ति-व्यवहारहेतुः-प्रागभावः। ध्वंसं लक्षयति-सादिरिति। घटादौ अतिव्याप्तिवारणाय-अनन्त इति। आकाशादौ अतिव्याप्तिवारणाय-सादिरिति। प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः 'ध्वस्त'व्यवहारहेतुः-ध्वंसः। अत्यन्ताभावं लक्षयति-त्रैकालिक इति। अन्योन्याभावेऽतिव्याप्तिवारणाय-संसर्गावच्छि-

विवृतिः

अनन्तत्वमात्रमेव लक्षणमिस्यत आह—आकाशादाविति। आदिना कालादिपरिग्रहः। अतिव्याप्तिवारणाय=आकाशादेरनन्ततया तत्र प्रसक्ताया अतिव्याप्तेर्वारणाय।

सादीति। तथा च सादित्वस्याकाशादावभावान्न तत्रातिव्याप्तिरिति भावः। प्रतियोगिजन्यः= घटादिरूपप्रतियोगिजन्यः। प्रतियोगीत्यादेः पूर्ववदर्थो बोध्यः। ध्वस्तव्यवहारहेतुः = 'ध्वस्त' इत्याकारकशब्दप्रयोगजनकः। इदन्तु तत्त्वम्—ध्वंसप्रागभावयोः प्रतियोगिसमवायिकारणवृत्तित्वाभिधानमसंगतमेव, ध्वंसप्रागभावस्य, प्रागभावध्वंसस्य, च समवायिकारणाऽप्रसिद्धेरतस्तयोः तदतिरिक्तदेशे काले च वर्त्तमानत्वमेव नवीनसम्मतं समीचीनं प्रतिभातीति॥ तादात्म्यातिरिक्तसंसर्गावच्छिन्नत्वार्थकस्य संसर्गावच्छिन्नत्वस्याऽत्यन्ताभावलक्षणघटकीभूतप्रतियोगितायां विशेषणत्वानुपादानेऽन्योऽन्याभावेऽतिव्याप्तिस्तत्रापि नित्यत्वरूपत्रैकालिकत्वसत्त्वादित्याह—अन्योऽन्याभावे-इति। तथा चान्योऽन्याभावप्रतियोगितायां

न्यायबोधिनी

अत्यन्ताभावं निरूपयति—त्रैकालिकेति। (प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभाव-

यथा—'भूतले घटो नास्ती'ति ॥ तादात्म्यसंबन्धावच्छिन्न-प्रतियोगिताकोऽन्योन्याभावः, यथा—'घटः पटो ने'ति ॥

दीपिका

न्नेति । ध्वंसप्रागभावयोरतिव्याप्तिवारणाय—त्रैकालिक इति । अन्योन्याभावं लक्षयति-तादात्म्येति । प्रतियोगितावच्छेदका-रोप्यसंसर्गभेदात् एकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्वै-

विवृतिः

तादात्म्यातिरिक्तसम्बन्धावच्छिन्नत्वाभावान्न तत्रातिव्याप्तिरित्याशयः । त्रैका-लिकत्वं नित्यत्वं तच्च लक्ष्यत्वेनाभिमताभावविशेषणं, तदनुक्तौ ध्वंसप्राग-भावयोरतिव्याप्तिः, तयोरपि प्राचीनमते तादात्म्यातिरिक्तपूर्वकालत्वोत्तरकाल-त्वरूपसंसर्गावच्छिन्नप्रतियोगिताकत्वादित्याह—ध्वंसेति । त्रैकालिक इति । तथा च ध्वंसप्रागभावयोर्नित्यत्वरूपत्रैकालिकत्वविरहात् न तयोर-तिव्याप्तिरिति भावः ॥ घटप्रतियोगिकस्याऽपि अत्यन्ताभावस्य कदाचित् संयोगावच्छिन्नप्रतियोगिताकतया कदाचिच्च समवायावच्छिन्नप्रतियोगिताक-तया एवं कदाचित् घटत्वमात्रावच्छिन्नप्रतियोगिताकतया कदाचित् तत्तद्घ-टत्वावच्छिन्नप्रतियोगिताकतया चात्यन्ताभावस्य, अन्योन्याभावस्य च नानात्वमवश्यमङ्गीकर्त्तव्यमित्याह—प्रतियोगितेति । प्रतियोगितावच्छेदक-

न्यायबोधिनी

त्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावान्योन्याभावाकाशादीनां-वारणाय यथाक्रमं विशेषणोपादानम् । वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । ध्वंसप्रागभा-वयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे त्रैका-लिकेति स्वरूपाख्यानमेवेति बोध्यम् ॥ )

अन्योन्याभावं निरूपयति—तादात्म्येति ॥

दीपिका

हुत्वम्, 'केवलदेवदत्ताभावाद्दण्ड्यभाव' इति प्रतीत्या—विशिष्टाभावः, 'एकसत्त्वेऽपि द्वौ न स्त' इति प्रतीत्या-द्वित्वावच्छिन्नाभावः, संयोग-सम्बन्धेन च घटवति समवायसम्बन्धेन घटाभावः—सम्बन्धाव-

विवृतिः

धर्मात्मकघटत्व-तद्घटत्वादेः आरोप्यस्य=प्रतियोगिनो घटादेः संसर्गस्य=संयोग-समवायादेर्भेदात् = नानात्वादित्यर्थः। एकप्रतियोगिकयोः = घटप्रतियोगिकयोः घटाद्यतिरिक्ताऽप्रतियोगिकयोरपि। बहुत्वं = नानात्वं। ननु कुत एतत्स्वीकरणीयमित्यत आह—केवलेति। दण्डाद्यनवच्छिन्नदेवदत्ताभावादित्यर्थः। दण्ड्यभावः = दण्डविशिष्टदेवदत्ताभावः।

इति प्रतीत्या = इत्याकारकाभावप्रत्यक्षादिना। विशिष्टाभावः=दण्डविशिष्टदेवदत्ताभावः। 'केवलदेवदत्ताभावादतिरिक्त' इत्यनुषज्यते। तथा च दण्डविशिष्टदेवदत्ताभावस्य देवदत्तप्रतियोगिकत्वेऽपि केवलदेवदत्ताभावानतिरिक्तत्वे केवलदेवदत्ताधिकरणे दण्डविशिष्टदेवदत्ताभावप्रत्ययो न स्यादिति भावः। एकसत्त्वेऽपि = घटसत्त्वेऽपि। द्वौ न स्तः = घटपटौ न स्तः। इति प्रतीत्या = इत्याकारकप्रत्यक्षादिना। द्वित्वावच्छिन्नाभावः = घटपटोभयत्वावच्छिन्नाभावः केवलघटाभावादतिरिक्त इत्यनुषज्यते। तथा च घटपटोभयाभावस्य घटप्रतियोगिकतया केवलघटाभावानतिरिक्तत्वे घटाधिकरणे घटपटोभयाभावप्रत्ययो न स्यादित्याशयः। सम्बन्धभेदेनाऽपि अभावभेदं प्रदर्शयति-संयोगेति। संयोगसम्बन्धावच्छिन्नघटनिष्ठाधेयतानिरूपिताधिकरणतावतीत्यर्थः। समवायसम्बन्धेन घटाभावः=समवायावच्छिन्नप्रतियोगिताकघटाभावः। संयोगावच्छिन्नप्रतियोगिताकघटाभावादतिरिक्त इत्यनुषज्यते। तयोरभिन्नत्वे संयोगेन घटवति समवायेन 'घटो नास्ती'ति प्रत्ययानुपपत्तिः स्यादिति हृदयम्। तत्तद्घटाभावात् = तत्त्वघटत्व—धर्मद्वयावच्छिन्नप्रतियोगिताकाभावात्। घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावः=

दीपिका

च्छिन्नाभावः। तत्तद्घटाभावाद्—घटत्वावच्छिन्नप्रतियोगिताक-सामान्याभावश्चातिरिक्तः' एवमन्योन्याभावोऽपि।

'घटत्वेन पटो नास्ती'ति व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते। पटे घटत्वं नास्तीति तस्यार्थः। अतिरिक्तत्वे स केवलान्वयी॥

विवृतिः

घटत्वमात्रावच्छिन्नप्रतियोगिताकाभावः। अतिरिक्त इति। तथा च तद्-घटत्वावच्छिन्नाभाव—घटत्वावच्छिन्नाभावयोरैक्ये घटान्तरवति तद्घटाभाव-प्रत्ययानुपपत्तिः, घटसामान्याभावप्रत्ययापत्तिश्चातस्तत्तदभावात् सामान्या-भावोऽतिरिक्त एवेति भावः। विशेषणशून्यतादशायां विशेष्ये विशिष्टभेद-मभ्युपगत्याऽऽह—एवमिति। तथा च केवलदेवदत्तभेदादितः दण्डविशिष्ट-देवदत्तभेदोऽपि अतिरिक्त एव, तयोरनतिरिक्तत्वे केवलदेवदत्ते दण्डविशिष्ट-देवदत्तभेदप्रत्ययानुपपत्तिरिति ध्येयम्। इदन्तु बोध्यम्। केवलदेवदत्ता-भावदण्डविशिष्टदेवदत्ताभावयोरनतिरिक्तत्वेऽपि न क्षतिः। न च तयोरैक्ये केवलदेवदत्तवति दण्डविशिष्टदेवदत्ताभावप्रत्ययानुपपत्तिरिति वाच्यम्। स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणताया एवात्य-न्ताभावविरोधितया केवलदेवदत्तवति दण्डवैशिष्ट्यदेवदत्तत्वधर्मद्वयावच्छिन्ना-धिकरणाताया असत्त्वेन तत्र तादृशाभावप्रत्यये बाधकाभावादिति॥ व्यधिकरणधर्मावच्छिन्नाभावः = स्वाधिकरणावृत्तिधर्मावच्छिन्नप्रतियोगिता-काभावः। स्वं=प्रतियोगिता। नाङ्गीक्रियत इति। तथा चाभावबुद्धौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वात् घटत्वविशिष्टपटा-प्रसिद्ध्या तादृशज्ञानासम्भवेन व्यधिकरणधर्मावच्छिन्नाऽभावप्रत्यय एवा-प्रसिद्धः अत एव 'शशविषाणं नास्ती'त्यपि न प्रतीतिरिति भावः। 'घटत्वेन पटो नास्तीति'ति प्रत्ययो यदि लोकानामवश्यमेव भवतीत्युच्यते

दीपिका

सामयिकाऽभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमानः, घटाभाववति घटानयने अत्यन्ताभावस्याऽन्यत्र गमनाभावेऽपि अप्रतीतेर्घटापसरणे सति प्रतीतेर्भूतलघटसंयोगप्रागभावध्वंसयोर्घ-

विवृतिः

तदाह—पट इति। तथा चोक्तप्रतीतिः पटे घटत्वाभावमेवावगाहते न तु घटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकाभावं पूर्वोक्तयुक्तेरित्याशयः। ननु 'घटत्वेन पटो नास्ती'ति प्रतीतिः घटत्वनिष्ठावच्छेदकत्वावगाहिन्येव न तु तन्निष्ठप्रतियोगित्वावगाहिनी, नञा तदर्थनिष्ठप्रतियोगिताकाभावबोधे प्रथमान्ततत्पदोपस्थाप्यत्वस्य तन्त्रत्वात्। न च प्रतियोगितावच्छेदकविशिष्ट-प्रतियोगिज्ञानासम्भवात् न घटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकाभावप्रत्यय इति वाच्यम्। प्रतियोगितावच्छेदकप्रकारतानिरूपितप्रतियोगिनिष्ठविशेष्यता-शालिज्ञानस्यैवाऽभावधीहेतुत्वेन विवक्षितत्वात्, तादृशविशेष्यताशालित्व-स्यान्यथाख्यात्यस्वीकर्तृणां मतेऽपि विभिन्नधर्मधर्मिगोचरयोः घटत्वस्मरण-पटानुभवयोरक्षतत्वात्, घटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकाभावस्य सर्व-सम्मतत्वसम्भवादित्यत आह—अतिरिक्तत्वे-इति। पटवृत्तिघटत्वाभावा-दतिरिक्तत्वे इत्यर्थः। केवलान्वयी=सर्वत्र वर्त्तमान इति संक्षेपः। नन्वत्यन्ता-भावस्य प्रतियोगिमत्यसत्त्वनियमात्, समयान्तरावच्छिन्नघटाद्यभावस्य घटवत्यपि देशे विद्यमानत्वात् सामयिकाभावोऽतिरिच्यतामत्यन्ताभावादित्यत आह-सामयिकेति। प्रतियोग्यनाधारसमयावच्छिन्नघटाद्यभाव इत्यर्थः।

समयविशेषे = प्रतियोग्यनाधारीभूतप्रलयादिसमये। प्रतीयमानः = प्रत्ययविषयीभूतः। अत्यन्ताभाव एव नत्वतिरिक्तः कश्चिदभाव इत्याशयः। नन्वत्यन्ताभावस्य नित्यतया घटशून्येऽपि भूतले घटानयनानन्तरं घटाभाव-प्रत्ययः स्यात् घटाभावस्यामूर्तत्वेनान्यत्र गतिमत्त्वस्यासम्भवादित्यत आह—घटाभाववतीति। तादृशे भूतले इति शेषः। अन्यत्र गमनाभावेऽपि =

दीपिका

टात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते । घटवति तत्संयोगप्राग-भावध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः । घटापसरणे च संयोगध्वंससत्त्वात् प्रतीतिरिति ।

केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तौ अभावो न

विवृतिः

तादृशभूतलातिरिक्तदेशे गमनासम्भवेऽपि । तस्यामूर्तत्वादित्याशयः । अप्रतीतेः = घटात्यन्ताभावाप्रतीतेः । घटापसरणे सति = पुनस्तादृशभूतला-दितो घटापसरणे सति । प्रतीतेः = घटात्यन्ताभावप्रतीतेः । ननु कस्तर्हि तादृशाप्रतीतिप्रतीतिनियामक इत्याकाङ्क्षायामाह—भूतलेति । भूतलघट-योर्यः संयोगस्तत्प्रागभावध्वंसयोरित्यर्थः । कल्प्यत इति । तथा च तादृश-प्रागभावध्वंससत्त्वे घटात्यन्ताभावप्रतीतिरसत्त्वे च न तथेति भावः । एतदेव स्पष्टयति—घटवतीति । घटानयनदशायां घटाधिकरणतावतीत्यर्थः । तत्संयोगप्रागभावध्वंसयोः=भूतलघटसंयोगप्रागभावध्वंसयोः । असत्त्वात् = अवर्तमानत्वात् । अत्यन्ताभावाप्रतीतिः = घटात्यन्ताभावाप्रतीतिः । घटापसरणे च = घटानयनानन्तरं पुनर्घटस्यापसरणे च । संयोगध्वंस-सत्त्वात् = भूतलघटसंयोगध्वंससत्त्वात् । प्रतीतिः = घटात्यन्ताभावप्रतीतिः । इदमापाततः । वस्तुतो घटात्यन्ताभावकालीनभूतलादेर्घटात्यन्ताभा-वसम्बन्धत्वोपगमादेव घटानयनानन्तरं घटात्यन्ताभावाप्रतीतेर्घटा-पसरणे च तादृशाभावप्रतीतेः सम्भवात् निरुक्तरीत्या तन्नियमोपपा-दनमनादेयमेवेति ध्येयम् ॥ गुरुमतं दूषयितुमुपन्यस्यति—केव-लेति । कैवल्यं प्रतियोग्यविशेषितत्वं, तद्विशिष्टादधिकरणादित्यर्थः । नास्तीतिव्यवहारोपपत्तौ = नास्तीतिशब्दप्रयोगोपपत्तिसम्भवे । अभावो न पदार्थान्तरम् = अभावो नाधिकरणातिरिक्तः अपि तु तत्स्वरूप एवेति भावः । गुरवः = प्रभाकराः, वदन्तीति शेषः । दूषयति—तत्रेति ।

दीपिका

पदार्थान्तरमिति—गुरवः, तन्न, अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात् ॥

अभावाभावो भाव एव, नातिरिक्तः, अनवस्थाप्रसङ्गात्। ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येवेति-प्राञ्चः। अभावाभावः अतिरिक्त एव। तृतीयाभावस्य प्रथमाभावरूपत्वात् नाऽनवस्थेति-नवीनाः ॥

विवृतिः

कैवल्यस्य = प्रतियोग्यनवच्छिन्नत्वस्य। अशक्यत्वादिति। तथा चाभावानङ्गीकारे कस्याधिकरणं कस्य वा प्रतियोगी भवेदिति भावः। इदमुपलक्षणं—अभावानभ्युपगमे रूपाभावादेरचाक्षुषत्वापत्तिः स्यात् भवन्मते तस्याकाशादिस्वरूपत्वादित्यपि द्रष्टव्यम्। नन्वभावाभावो यद्यतिरिक्तस्तदा तदभावोऽपि तथेत्यनवस्था स्यादित्यत आह तदभावेति। घटाद्यभावाभाव इत्यर्थः। भाव एव = घटादिस्वरूप एव। नातिरिक्तः = न घटादिभावादतिरिक्तः। अतिरिक्तत्वे दोषमाह—अनवस्थेति। ध्वंसप्रागभावः = घटादिध्वंसप्रागभावः। प्रागभावध्वंसः = घटादिप्रागभावध्वंसः। प्रतियोगिस्वरूपः = यथाक्रमं प्रागभावप्रतियोगी यो ध्वंसस्तत्प्रतियोगी, ध्वंसप्रतियोगी यो प्रागभावस्तत्प्रतियोगी च यो घटादिस्तत्स्वरूपः नत्वतिरिक्त इति भावः। ननु घटाभावाभावो यदि घटस्तर्हि घटाभावाभावोऽभाव इति प्रमाप्रतीतिर्न स्यात् न चेष्टापत्तिस्तादृशप्रतीतेः सर्वानुभवसिद्धत्वादित्याशयेन नवीनमतं प्रदर्शयति अभावेति। घटाद्यभावाभाव इत्यर्थः। अतिरिक्त एव = घटादिभावादतिरिक्त एव। एवकारेण-अभावाभावस्य भावस्वरूपत्वव्यवच्छेदः। नन्वेवं घटाभावाभावस्यातिरिक्तत्वे तदभावस्याऽपि अतिरिक्ततयाऽनवस्था स्यादित्यत आह-तृतीयेति। घटाभावाभावाभावस्येत्यर्थः॥ प्रथमाभावरूपत्वात् = घटाभावस्वरूपत्वात्। नानवस्थेति। अवस्थायाः सम्भवादित्याशयः।

सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम् ।

दीपिका

ननु "प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-ऽवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभासच्छल-जाति-निग्रह-स्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम" इति न्यायशास्त्रे षोडशपदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह—सर्वेषामिति । सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः । 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्'—इति द्वादशविधं प्रमेयम् । प्रवृत्तिः = धर्माधर्मौ । रागद्वेषमोहाः = दोषाः । रागः = इच्छा । द्वेषो = मन्युः । मोहः = शरीरादौ आत्मत्वभ्रमः ।

विवृतिः

नवीनाः प्राहुरित्ति शेप इति दिक् । प्रमाणादीनां सप्तस्वेवान्तर्भावमाह-आत्मेति । प्रवृत्तेर्गुणात्मकतया सप्तान्तर्भावत्वेऽपि प्रमेयपदार्थघटकप्रवृत्तिपदार्थस्याऽपि तथात्वं प्रदर्शयितुमाह-प्रवृत्तीति । दोषा अपि नातिरिक्ता इत्याह-राग इति । मन्युः = क्रोधः । आत्मत्वभ्रमः = 'अहं गौर' इत्याद्या-

न्यायबोधिनी

सर्वेषामिति । 'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-ऽवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति न्यायस्यादिमसूत्रे उक्तानां प्रमाणप्रमेयादीनामित्यर्थः । विस्तरस्त्वन्यत्रानुसंधेयः ।

❀ इति श्रीगोवर्धनविरचिता न्यायबोधिनी समाप्ता ❀

---

विस्तरस्त्वन्यत्रानुसन्धेयः = न्यायदर्शनादौ अनुसन्धेयः ॥

दीपिका

प्रेत्यभावो = मरणम् । फलं = भोगः । अपवर्गो = मोक्षः, स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । प्रयोजनम् = सुखप्राप्तिः, दुःखहानिश्च । दृष्टान्तो = महानसादिः । प्रामाणिकत्वेन अभ्युपगतोथः = सिद्धान्तः । निर्णयो = निश्चयः, स च प्रमाणफलम् । तत्त्वबुभुत्सोः कथा = वादः । उभयसाधनवती

विवृतिः

कारकभ्रमः । भोगः = सुख–दुःखान्यतरसाक्षात्कारः । मोक्षपदार्थं व्याचष्टे– स चेति । स्वं = दुःखध्वंसः तत्समानाधिकरणो यो दुःखप्रागभावस्तत्समानकालीनो यो यः स्वपदप्रतिपाद्यो दुःखध्वंसः तावद्भेदकूटवत् दुःखध्वंसो मोक्ष इत्यर्थः । तथा च स्वपदेनास्मदाद्यमुक्तपुरुषीयदुःखध्वंसमादाय लक्षणसमन्वय इति भावः । यथाश्रुतार्थस्तु न संगच्छते, स्वपदेन मुक्तपुरुषीयदुःखध्वंसस्योपादाने तत्समानाधिकरणदुःखप्रागभावस्याप्रसिद्ध्याऽसम्भवापत्तेः । मुक्तपुरुषीयदुःखध्वंसमात्रस्यैव प्रायशोऽस्मदादिदुःखप्रागभावसमानकालीनतया असम्भवः स्यादतो स्वसामानाधिकरण्यं दुःखप्रागभावविशेषणम्, नहि तादृशं स्वं मुक्तपुरुषीयदुःखध्वंसः, तत्समानाधिकरणदुःखप्रागभावाऽप्रसिद्धेः, किन्त्वमुक्तपुरुषीयदुःखध्वंस एवेति नासम्भवः । दुःखध्वंसमात्रस्य मुक्तित्वेऽमुक्तानामपि मुक्तत्वापत्तिः, तेष्वपि दुःखध्वंसवत्त्वस्य सत्त्वात्, अतः कालीनान्तं स्वपदार्थविशेषणम् । न चाननुगमः, दुःखध्वंसविशिष्टान्यदुःखध्वंसस्यैव मुक्तिपदार्थत्वात्–वैशिष्ट्यं च स्वतादात्म्यस्वसमानाधिकरणदुःखप्रागभावकालीनत्वोभयसम्बन्धेनेति ध्येयम् । संशयस्य ज्ञानस्वरूपतया गुणात्मकत्वे निर्विवादात् प्रयोजनपदार्थमाह–सुखेति । सुखं दुःखाभावश्च मुख्यप्रयोजनं, गौणप्रयोजनन्तु

---

सदानन्दवने वन्दे सदानन्दप्रदायिनीम् । चिदानन्दमयीमेकां मन्दानन्दविवृद्धये ॥

इति श्रीतर्कतीर्थ-न्यायाचार्य्य—श्रीवामाचरणभट्टाचार्य्यविरचिता—

न्यायबोधिनीटिप्पणी समाप्ता ।

दीपिका

विजिगीपुकथा = जल्पः । स्वपक्षस्थापनहीना = वितण्डा । कथा नाम = 'नानावक्तृकः पूर्वोत्तरपदप्रतिपादकवाक्यसन्दर्भः' । अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं प्रकल्प्य दूपणं = छलम् ।

असदुत्तरं = जातिः । 'साधर्म्य-वैधर्म्योत्कर्षाऽपकर्षवर्ण्या-

विवृतिः

तत्साधनमित्यवधेयम् । अभ्युपगमोऽर्थः = स्वीक्रियमाणोऽर्थः । स चेति । निश्चयश्चेत्यर्थः । प्रमाणफलं = प्रत्यक्षादिप्रमाणानां फलं । तत्त्वेति । इदमित्थमित्याकारकं यत्तत्त्वं तद्विपयकज्ञानेच्छावत इत्यर्थः, गुरुशिष्ययोः कथा वाद इति तु फलितार्थः । उभयसाधनवती = सपक्षपरपक्षस्थापनावती । विजिगीपुकथां = जयेच्छावतः कथा, तादृशी वादभिन्ना कथा इति यावत् । स्वपक्षेति । निजपक्षसाधनशून्येत्यर्थः । कथालक्षणमाह—कथेति । नानावक्तृकः = एकभिन्नवक्तृकः । पूर्वपक्षप्रतिपादकः उत्तरपक्षप्रतिपादकश्च वाक्यसन्दर्भः = न्यायानुगतवचनसन्दर्भः कथेत्यर्थः । अभिप्रायान्तरेण = एकाभिप्रायेण, प्रयुक्तस्य शब्दस्य शक्त्या लक्षणया वा अर्थान्तरं प्रकल्प्य दूपणाभिधानं छलं, यथा 'श्वेतो धावती'त्युक्ते श्वेतरूपात्मकाऽर्थान्तरेण धावनाप्रसिद्ध्यभिधानम् । असदुत्तरं=स्वव्याघातकमुत्तरम् । न्यायसूत्रोक्तं जातिभेदं प्रदर्शयति—साधर्म्येति ।

---

(१) वादिना—अन्वयिना व्यतिरेकिणा वा हेतुना यत्किञ्चित्पक्षे साध्यस्योपसंहारे कृते व्याप्तिनिरपेक्षसाधर्म्यमात्रप्रवृत्तहेतुना प्रतिवादिनः पक्षे साध्याभावापादन–प्रकाशकमुत्तरवाक्यं–साधर्म्यसमा, यथा-गगनं-नित्यं, विभुत्वात्, आत्मवत्, व्यतिरेकेण घटवद्वा, इत्युक्ते, यदि नित्यात्मसाधर्म्यात् अनित्यघटवैधर्म्याद्वा विभुत्वात्, गगनं नित्यं स्यात् तदाऽनित्यघटसाधर्म्यात् द्रव्यत्वादनित्यमपि स्यादिति ॥ १ ॥ तादृशस्थले तादृशवैधर्म्यमात्रप्रवृत्तहेतुना तादृशपक्षे साध्याभावापादनप्रकाशकमुत्तरवाक्यं–वैधर्म्यसमा, यथा नित्यात्मवैधर्म्यात् शब्दाश्रयत्वात् अनित्यमपि गगनं स्यादिति ॥ २ ॥ वाद्युपसंहृतसाध्यधर्मिणि

वाद्युक्तेनैव हेतुना प्रतिवादिनस्तादृशधर्मिण्यविद्यमानस्य कस्यचित् धर्मस्यापत्ति-प्रकाशकमुत्तरं उत्कर्षसमा, यथा पूर्वोक्तं गगनं, आत्मवत्–सुखादिमदपि-स्यादिति ॥ ३ ॥ वाद्युक्तेन दृष्टान्तेन तदीयसाध्यनिश्चयविषयीभूते धर्मिणि विद्यमानस्य धर्मस्याभावापत्तिप्रकाशकं प्रतिवादिन उत्तरवाक्यं अपकर्षसमा, यथा त्वदीयदृष्टान्तीभूते आत्मनि शब्दकारणत्वाभावसत्त्वात् पूर्वोक्तं गगनमपि शब्दकारणं न स्यात् ॥ ४ ॥ वाद्युक्तानिश्चितसाध्यधर्मिणि दृष्टान्तपदार्थे पक्षधर्मस्य सन्दिग्धसाध्यकत्वस्यापत्तिप्रकाशकं प्रतिवादिन उत्तरवाक्यं–वर्ण्यसमा, यथा पूर्वोक्तं गगनं चेत् नित्यतया सन्दिग्धं, तदाऽत्मापि नित्यत्वेन–सन्दिग्धः स्यात् ॥ ५ ॥ वाद्युक्तसाध्यधर्मिणि पक्षे, दृष्टान्तधर्मस्य निश्चितसाध्यकत्वस्या-पत्तिप्रकाशकं प्रतिवादिन उत्तरवाक्यं–अवर्ण्यसमा, यथा पूर्वोक्तस्थले दृष्टान्ती-भूतः आत्मा यद्यवश्यं नित्यत्वेन निश्चितस्तदा गगनमपि नित्यतया निश्चितं स्यात् ॥ ६ ॥ वाद्युक्तहेतौ साध्यातिरिक्तस्य कस्यचित् धर्मस्य व्यभिचारं प्रदर्श्य तादृशहेतौ प्रकृतसाध्यस्य व्यभिचारापादनंप्रकाशकप्रतिवादिन उत्तरवाक्यं—विकल्पसमा, यथा पूर्वोक्तविभुत्वहेतोः सुखादिव्यभिचारितया, नित्यत्वस्यापि व्यभिचारस्तत्र स्यात् ॥ ७ ॥ पक्षस्य–दृष्टान्तस्य च प्रकृतसाध्यतुल्यतापत्ति-प्रकाशकं प्रतिवादिन उत्तरं–साध्यसमा, यथा–यथाऽत्मा तथा गगनमित्युक्तौ गगनवत् आत्माऽपि नित्यत्वेन–साध्यं स्यात् अवयवादिप्रयोगसाध्यस्यैवानुमिति-विषयत्वात् ॥ ८ ॥ वाद्युक्तहेतुसाध्ययोः परस्परसम्बन्धं प्रदर्श्य तयोः साम्य-समर्थनेन दोषाभिधानात्मकं प्रतिवादिन उत्तरवाक्यं–प्राप्तिसमा, यथा 'वह्निमान् धूमादि'त्युक्तौ, वह्निना सम्बद्ध एव धूमः साधकः, असम्बद्धस्य साधकत्वेऽतिप्रसंगात् तथा चोभयोरविशेषात् कः कस्य साधको भवेत् ॥ ९ ॥ हेतुसाध्ययोः परस्परसम्बन्धाभावे हेतोरसाधकत्वादनिष्टापत्तिप्रकाशकं प्रतिवादिन उत्तरवाक्यं–अप्राप्तिसमा, यथा–वह्निना धूमश्चेदसम्बद्धः साध्यज्ञानं जनयति तदाऽप्राप्तत्वाविशेषात् साध्याभावज्ञानं किं न जनयेत् ॥ १० ॥ वाद्युक्ते दृष्टान्ते-प्रमाणं पृच्छतः प्रतिवादिनः दृष्टान्तासिद्धिरूपदोषाभिधानात्मकमुत्तरवाक्यं—प्रसंगसमा, यथा–पूर्वोक्तगगनपक्षकानुमानस्थले आत्मनो नित्यत्वे किं प्रमाणं ?

दीपिका

वर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्ताऽनुत्पत्ति संशयप्रकरण-

प्रमाणाकथनेन दृष्टान्तासिद्धिः ॥ ११ ॥ प्रतिदृष्टान्तमात्रेण दुषणाभिधानात्मकं प्रतिवादिन उत्तरवाक्यं प्रतिदृष्टान्तसमा, यथा यद्यात्मदृष्टान्तबलेन गगनं नित्यं स्यात्, तदा घटदृष्टान्तबलेन अनित्यं किं न स्यात् ॥१२॥ पक्षादेरुत्पत्तेः प्राक् हेत्वभावं प्रदर्श्य प्रतिवादिनो दूषणाभिधानात्मकमुत्तरमनुत्पत्तिसमा, यथा—शब्दोऽनित्यः—प्रयत्नाऽनन्तरीयकत्वादित्युक्ते शब्दोत्पत्तेः प्राक् तत्र हेतोरसत्त्वात् शब्दे प्रयत्नाऽनन्तरीयकत्वमनित्यत्वसाधकं न स्यात् ॥१३॥ वाद्युक्तहेतुना निश्चितसाध्यवति यत्किञ्चित्संशयकारणसत्त्वप्रदर्शनेन साध्यस्यापि संशयप्रदर्शकं प्रतिवादिन उत्तरवाक्यं संशयसमा, यथाऽनित्यघटधर्मस्य प्रयत्नजन्यत्वस्य शब्दे सत्त्वात् शब्दो यदि अनित्यस्तदा इन्द्रियग्राह्यत्वस्य अनित्यघटधर्मस्य, नित्यघटत्वधर्मस्य च शब्दे सत्त्वात् शब्दः किं घटवदनित्यः, घटत्ववन्नित्यो वा ॥ १४ ॥ प्रकृतसाध्यसिद्धेः पूर्वं अधिकबलत्वेनाभिमतप्रमाणान्तरेण बाधप्रदर्शकं प्रतिवादिन उत्तरवाक्यं प्रकरणसमा, यथा कार्यत्वेन शब्दस्यानित्यत्वं न सम्भवदुक्तिकं पूर्वं श्रावणत्वेन नित्यत्वस्यैव सिद्धेरिति ॥ १५ ॥ हेतुत्वासिद्धिं प्रदर्श्य प्रतिवादिनो दूषणाभिधानात्मकमुत्तरमहेतुसमा, यथा प्रयत्नादिकं शब्दादेः पूर्ववर्त्तितया न कारणं, तदानीं शब्दाभावात् कस्य कारणं स्यात् ? सुतरामेव नोत्तरवर्त्तितया तथा, समानकालीनयोस्तु शब्दप्रयत्नयोः कार्यकारणभावे विनिगमनाविरहापत्तेरिति हेतुत्वमसिद्धमेव ॥ १६ ॥ अर्थापत्त्याभासेन दूषणाभिधानात्मकं प्रतिवादिन उत्तरवाक्यं—अर्थापत्तिसमा, यथा पर्वतो वह्निमानित्युक्तौ अर्थादापद्यते अन्यस्तु वह्निशून्य इति, तथा च भवति दृष्टान्तासिद्धिः ॥ १७ ॥ सन्मात्रवृत्तिधर्मेण सर्वेषां पदार्थानां अविशेषापादन—प्रकाशकं प्रतिवादिन उत्तरवाक्यं अविशेषसमा, यथा यदि विभुत्वात् गगनात्मनोर्नित्यत्वेनाविशेष उच्यते तदा सत्त्व-मेयत्वादितः सर्वे एवाविशेषाः स्युस्तथा च पक्षादिविभागो न स्यात् ॥ १८ ॥ स्वपक्षसाधकं हेतुं प्रदर्श्य स्वपक्षसाध्य-

दीपिका

हेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्याकार्य्यसमा जातयः ॥

त्यापत्तिप्रकाशकं प्रतिवादिन उत्तरं उपपत्तिसमा, यथा शब्दोऽनित्यः, प्रयत्नजन्यत्वात् घटवदित्युक्ते नित्यत्वसाधकस्य स्पर्शशून्यत्वस्यापि शब्दे सत्त्वात् शब्दे नित्यत्वसिद्धिः कथं न स्यात् ॥ १९ ॥ वादुक्तसाधनपदार्थस्याभाववत्यपि कस्मिंश्चित्पदार्थे साध्यस्योपलब्धिर्भवतीति प्रदर्श्य, तदीयहेतोरसाधकत्व-प्रकाशकं प्रतिवादिन उत्तरवाक्यमुपलब्धिसमा, यथा प्रबलपवनाघातजन्ये शब्दे प्रयत्नजन्यत्वस्याभावेऽप्यनित्यत्वस्योपलम्भात् प्रयत्नजन्यत्वं न शब्दस्या-नित्यत्वसाधकम् ॥ २० ॥ अनुपलब्ध्या कस्यचित्पदार्थस्याऽसत्तां व्यवस्थापयन्तं वादिनं प्रति तत्पदार्थानुपलब्धेरनुपलब्ध्या तत्पदार्थस्य सत्ताप्रकाशकं प्रतिवा-दिन उत्तरवाक्यमनुपलब्धिसमा, यथा शब्दो यदि नित्यः स्यात् तदोच्चारणात् प्राक् कुतो नोपलभ्यते ? न चावरणादेव तदानीं नानुपलब्धिरिति साम्प्रतं, तदनुपलब्धेरावरणाभावस्यैव सिद्धेरित्युक्तौ यद्यावरणानुपलब्ध्याऽऽवरणाभावः सिद्ध्यति, तदाऽऽवरणानुपलब्धेरप्यनुपलम्भादावरणमेव तदानीं किं न सिद्ध्येत् ॥ २१ ॥ दृष्टान्तसाधर्म्येण सर्वेषां पदार्थानामनित्यत्वापत्तिप्रकाशकं प्रतिवादिन उत्तरवाक्यमनित्यसमा, यथा यदि घटसाधर्म्यात् कृतकत्वात् शब्दो घटवदनित्यस्तदा घटसाधर्म्यात् सत्ताप्रमेयत्वादितः सर्वे एव पदार्था अनित्याः स्युः ॥ २२ ॥ शब्दादेरनित्यत्वं नित्यमनित्यं वेति पृच्छतः प्रतिवादिनः शब्दादौ सर्वथा नित्यत्वापत्तिप्रकाशकमुत्तरवाक्यं नित्यसमा, यथा यदि शब्दस्यानित्यत्वं नित्यं, तदा तस्य सर्वदैव शब्दे विद्यमानतया शब्दस्यापि सर्वकालवृत्तित्वात् नित्यत्वं स्यात्, यद्यनित्यत्वमनित्यं तदा यस्मिन् काले शब्देऽनित्यत्वाभावस्तस्मिन्नेव काले शब्दो नित्यः स्यात् अनित्यत्वाभावस्यैव नित्यत्वात् ॥ २३ ॥ पूर्वोक्तजातिभिन्नं स्वव्याघातकमुत्तरं कार्य्यसमा, यथा मम पक्षे कश्चित् दोषो-भविष्यतीति शङ्का पिशाचीसमा कार्य्यसमैव ॥ २४ ॥

दीपिका

वादिनोपजयहेतुः = निग्रहस्थानम् । प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम्,

विवृतिः

निग्रहस्थानलक्षणमाह—वादिन इति । वादिनः प्रतिवादिनो वा योऽपजयः पराजयस्तस्य हेतुः कारणंनिग्रहस्थानमित्यर्थः।

### ❀ अथ निग्रहस्थाननिरूपणम् ❀

वादिनः प्रतिवादिनो वा स्वोक्तानां पक्षसाध्यादीनां मध्ये कस्यचित्पक्षादेः परित्यागः प्रतिज्ञाहानिः, 'घटो रूपवान् पृथिवीत्वादि'त्युक्ते, उत्पत्तिकालावच्छेदेन वाधे प्रत्युक्ते, अस्तु तर्हि परमाणुरेव पक्ष इति ॥ १ ॥ वादिनः प्रतिवादिनो वा, हेतुभिन्नप्रातिज्ञातार्थस्य विशेषणान्तरविशिष्टतया कथनं प्रतिज्ञान्तरम्, यथा घटो रूपवान् गन्धादित्युक्ते तैजसघटे हेत्वसिद्धौ प्रत्युक्तायां, अस्तु तर्हि पार्थिवघट एव पक्ष इति ॥ २ ॥ वादिनः प्रतिवादिनो वा स्ववचनार्थविरोधः प्रतिज्ञाविरोधः, यथा ह्रदो वह्निमान् ह्रदत्वादित्युक्ते प्रतिज्ञाहेत्वोः परस्परविरुद्धतया वादी निगृहीतो भवतीति ॥ ३ ॥ प्रतिवादिप्रदत्तदोषमुद्धर्तुमसमर्थस्य वादिनः प्रतिज्ञातार्थापलापः प्रतिज्ञासन्न्यासः, यथा घटो रूपवान् पृथिवीत्वादित्युक्ते उत्पत्तिकालीनघटे व्यभिचारे प्रत्युक्ते क एवमाह–घटो रूपवानिति ॥ ४ ॥ प्रतिवादिना वाद्युक्ते हेतौ व्यभिचारे प्रदर्शिते तत्परिजिहीर्षया विशेषणान्तरविशिष्टतया हेतुकथनं हेत्वन्तरम् , यथा शब्दोऽनित्यः वहिरिन्द्रियग्राह्यत्वादि'त्युक्ते जातौ व्यभिचारे प्रत्युक्ते जातिमत्त्वरूपविशेषणवत्त्वेन हेत्वभिधानम् ॥ ५ ॥ प्रतिज्ञादिना स्वपक्षं स्थापयतो वादिनः प्रतिवादिनो वा प्रकृताऽनाकांक्षिताभिधानमर्थान्तरम् , यथा 'सत्ता नित्या, सर्वकालवृत्तित्वादि'त्यभिधाय सत्ता जातिः सा च द्रव्यादौ वर्त्तत इत्यादि ॥ ६ ॥ स्वपक्षं स्थापयतो वादिनः प्रतिवादिनो वा अवाचकशब्दप्रयोगो निरर्थकम् , यथा शब्दोऽनित्यः, क-च-ट-त-पानां ज-ब-ग-ड-दं-श-त्वात्, झ-भ-ञ्-घ-ढ-ध-वत् एवम्प्रकारं वचनम्॥७॥

दीपिका

निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालं, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा,

मध्यस्थादेः प्रतिवादिनश्च बोधाजनकं वादिना त्रिरभिहितं वाक्यं निरर्थकम्, यदा नैयायिक-मीमांसकयोर्विचारे अन्यतरस्य सांख्यादितन्त्रमवलम्ब्याभिधानम् ॥ ८ ॥ स्वघटकप्रत्येकपदादीनां अर्थबोधजनकत्वसत्त्वेऽपि यादृशपदसमुदायो वाक्यसमुदायो वा सम्भूय नाऽर्थबोधजनकः तादृशपदसमूहप्रयोगतादृशवाक्यसमूहप्रयोगो वाऽपार्थकम्, यथा—'घटः कर्मत्वं आनयनं कृति'रित्यादि ॥ ९ ॥ यदा यत् वक्तव्यं तत् पूर्वमेव तस्याभिधानमप्राप्तकालम्, यथा-प्रतिज्ञायाः पूर्वमेव हेत्वभिधानम् ॥ १० ॥ प्रतिज्ञादीनां स्वमतसिद्धानां अवयवानां येन केनाप्यवयवेन हीनं वाक्यं न्यूनम्, यथा नैयायिकानां अवयवद्वयेनाभिधानम् ॥ ११ ॥ यादृशहेतूदाहरणादिवाक्यानां फलसिद्धिः पूर्वमेव वाक्यान्तरेण सम्पन्ना अपुनरुक्तं तादृशहेतूदाहरणादिवाक्यमधिकम्, यथा—'धूमादालोकाद्वेत्यादिकम् ॥ १२ ॥ प्रयोजनं विना कस्यचित् शब्दस्याऽर्थस्य वा पुनरभिधानं पुनरुक्तम्, यथा-घटो घटः घटः कलश इति वा ॥ १३ ॥ मध्यस्थादिभिर्विज्ञातार्थकस्य वादिना त्रिरभिहितस्य वाक्यस्याऽप्रत्युच्चारणे प्रतिवादिना कृते तस्याननुभाषणं नाम निग्रहस्थानम्, एतच्चोत्तरप्रतिपत्तावपि सभाक्षोभादिना सम्भवति ॥ १४ ॥ पूर्ववत् मध्यस्थादिभिर्विज्ञातार्थकस्य वादिना त्रिरभिहितस्यापि वाक्यस्यार्थमविदुषः प्रतिवादिनः अज्ञानं नाम निग्रहस्थानम्। एतदपि किं कथयसि, ज्ञायत एव नेत्याद्याविष्करणेन ज्ञातुं शक्यम् ॥१५॥ वादिवाक्यस्यानुभाषणं कृतवतो विदितवादिवाक्यार्थकस्यापि प्रतिवादिनः यद्युत्तराऽज्ञानं भवति तदा तस्याऽप्रतिभानामकं निग्रहस्थानम्, अप्रतिभा चानुमेया ॥१६॥ भविष्यत्पराजयसम्भावनया प्रतिवादिना वाद्युक्त्यनन्तरमेव, अथवा स्ववक्तव्यं किञ्चिदभिधाय निजगृहादौ कस्यचित् कार्य्यस्यास्तित्वमाविष्कुर्वता, अवश्यं मया गृहं गन्तव्यं पश्चादागत्योत्तरं वक्तव्यमित्यादिकमनृतमभिधाय कथाविच्छेदं

दीपिका

विक्षेपः, मतानुज्ञा, पर्य्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि । शेषं सुगमम् ।

ननु करतलानलसंयोगे सत्यपि प्रतिबन्धके सति दाहानुपपत्तेः शक्तिः पदार्थान्तरमिति चेन्न । प्रतिबन्धकाभावस्य कार्य्य-

विवृतिः

पुनः शंकते—नन्विति । करेति । पूर्वं यादृशादनलसंयोगात् हस्तादेर्दाहो दृष्टस्तादृशे हस्तानलसंयोगे सत्यपीत्यर्थः । प्रतिबन्धके सति = मन्त्रादिरूपप्रतिबन्धके सति । शक्तिरिति । तथा च मन्त्रादिसमवहितकरतलानलसंयोगादौ दाहानुकूलायाः शक्तेस्तिरोभावस्तदसमवहिते च तत्र तादृशशक्तेराविर्भाव इत्येवं स्वीकर्त्तव्यमन्यथा मन्त्रादिसमवहितादपि तादृशसंयोगादितो दाहापत्तिः स्यादित्याशयः । यदि च मन्त्रादिसमवधानवशादेव

---

कृतवता यदि सभां परित्यज्य गम्यते, तदा तस्य विक्षेपनामकं निग्रहस्थानम् ॥ १७ ॥ स्वपक्षे वादिप्रदर्शितदोषं स्वीकृत्य वादिपक्षेऽपि तत्तुल्यदोषापत्तिं प्रकाशयतः प्रतिवादिनो मतानुज्ञानामकं निग्रहस्थानम् , यथा भवाँश्चौरः पुरुषत्वादित्युक्ते, भवानपि चौर इत्यादिकम् ॥ १८ ॥ वादिनि, प्रतिवादिनि वा यादृशनिग्रहस्थानस्य सम्भवे, यथाकालं तादृशनिग्रहस्थानमनुद्भावयतः प्रतिवादिनः पर्यनुयोज्योपेक्षणनामकं निग्रहस्थानम् , एतच्च मध्यस्थोद्भाव्यमेव ॥ १९ ॥ यथासमये प्रकृतनिग्रहस्थानोद्भावनाभिन्नं यत् निग्रहस्थानोद्भावनं तत् निरनुयोज्यानुयोगनामकं निग्रहस्थानम् , यथा—व्यभिचारादावसिद्ध्याद्युद्भावनम् ॥ २० ॥ प्रतिज्ञातसिद्धान्तं परित्यजतो विपरीतसिद्धान्तं स्वीकृत्याप्रवृत्तकथाप्रसंगस्य वादिनः अपसिद्धान्तनामकं निग्रहस्थानम् , यथा सांख्यमतमवलम्ब्य विचारं विदधतो नैयायिकमतमवलम्ब्य मीमांसकप्रश्नस्योत्तराभिधानम् ॥ २१ ॥ हेत्वाभासाश्च पूर्वोक्ता वेदितव्या इति संक्षेपः ॥ २२ ॥

दीपिका

...त्वे कारणत्वेन शक्तेरनुपयोगात्, कारणत्वस्यैव शक्तिपदार्थ-त्वात्। ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादाधेयशक्तिरङ्गी-कार्येति चेन्न। भस्मादिसंयोगसमानकालीनास्पृश्यस्पर्शप्रतियोगि-यावदभाव-सहित-भस्मादि-संयोगध्वंसस्य शुद्धिपदार्थत्वात्॥

विवृतिः

...दाहस्तदा मन्त्रादिकमवश्यं दाहप्रतिबन्धकं वाच्यं, तथात्वे तदभावस्यापि दाहकारणतायाः सर्वानुभवसिद्धतया, अतिरिक्तशक्तिकल्पनं निर्युक्तिक-मित्याशयेन समाधत्ते—प्रतिबन्धकेति। मन्त्रादिरूपप्रतिबन्धकाभाव-...त्यर्थः। शक्तेरनुपयोगात् = शक्तेर्दाहाद्यप्रयोजकत्वात्, शक्तिकल्पनाया निर्युक्तिकत्वादिति यावत्। शक्तेः प्रामाणिकत्वेऽपि न क्षतिरित्याह—कारण-त्वस्येति। तथा च कारणनिष्ठा कारणताऽतिरिक्ता नास्ति काचित् शक्तिरिति भावः। भस्मादिनेति। आदिपदात् शुद्धिजनकवस्त्वन्तरपरिग्रहः। कांस्यादावित्यत्रादिपदात् ताम्रादिपरिग्रहः। शुद्धिदर्शनात् = भोजनादौ व्यवहार्यतानियामिकायाः भस्मादिसंयोगजन्यायाः आधेयीभूतायाः शुद्धि-रूपशक्तेर्दर्शनात्। तथा चावश्यं कांस्यादौ तादृशशुद्धिरूपा शक्तिरङ्गी-कर्त्तव्येत्यभिमानः। अभिमानं निराकरोति-भस्मादीति। भस्मादिसंयोग-समानकालीना यावन्तोऽस्पृश्यवस्तुस्पर्शाः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगि-ताकाभावकूटविशिष्टो यो भस्मादिसंयोगध्वंसस्तस्येत्यर्थः। तथा च तादृश-ध्वंसस्यैव शुद्धिपदार्थत्वसम्भवे तत्स्वरूपशक्तिस्वीकारो न युक्त इत्याशयः। अस्पृश्यवस्तुमत्यपि कांस्यादौ भस्मसंयोगध्वंससत्त्वे बाधकाभावात्तादृश-वस्तुमत्कांस्यादेरपि शुद्धत्वापत्तिवारणाय तादृशाभावकूटवैशिष्ट्यं भस्म-संयोगध्वंसविशेषणम्। भस्मसंयोगाऽसमानकालीनयावदस्पृश्यस्पर्शादेर-भावकूटविशिष्टभस्मादिसंयोगध्वंसस्यास्पृश्यस्पर्शवत्यपि कांस्यादौ सम्भवा-त्तादृशध्वंसस्य शुद्धित्वापत्तिवारणाय भस्मादिसंयोगसमानकालीनत्वम-

दीपिका

स्वत्वमपि न पदार्थान्तरम्, यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात्, तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति ॥

अथ विधिर्निरूप्यते—प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः, तत्प्रतिपादको लिङादिर्वा। कृत्यसाध्ये प्रवृत्त्यदर्शनात्,

विवृतिः

स्पृश्यस्पर्शविशेषणम्। यत्किञ्चिदस्पृश्यस्पर्शाभावविशिष्टभस्मादिसंयोगनाशस्य शुद्धित्वापत्तिवारणाय यावत्त्वमभावविशेषणमिति संक्षेपः।

स्वत्वस्यातिरिक्तपदार्थत्वमङ्गीकुर्वतां मतं निरस्यति—स्वत्वमपीति। अपिना प्रतियोगित्वानुयोगित्वपरिग्रहः। स्वत्वं यदि द्रव्यं स्यात्, तदा गुणाऽधिकरणं स्यात् यदि गुणादिकं स्यात्तदा गुणवृत्ति न स्यात्, यदि च सामान्यादि स्यात्तदा नित्यं स्यात्, अभावरूपं चेत्तदा स्वत्वेन प्रतीयमानं न स्यात्, इत्याद्यापत्तिस्तु न घटते, स्वत्वादेः स्वरूपसम्बन्धरूपतया यथायथं गुणादिस्वरूपत्वे बाधकाभावादित्याशयेनाह—यथेष्टेति। यथेच्छाविषयीभूतो यो विनियोगः दानविक्रयादिस्तद्योग्यत्वस्येत्यर्थः। स्वत्वरूपत्वात् = स्वत्वस्वरूपत्वात्। तादृशयोग्यत्वन्तु नातिरिक्तः पदार्थः, तस्यापि स्वरूपसम्बन्धरूपत्वादित्यवधेयम्। एवं प्रतियोगित्वादिकमपि बोध्यम्। तदवच्छेदकं = तादृशयोग्यत्वस्यावच्छेदकं। प्रतिग्रहादीति। आदिना वेतनादिपरिग्रहः। तथा च प्रतिग्रहादिलब्धत्वावच्छिन्नं यत् यथेष्टविनियोगयोग्यत्वं तस्यैव-स्वत्वस्वरूपत्वमिति भावः। इदानीमवसरसंगत्या विधिं निरूपयितुमाह—अथेति। सर्वेषां पदार्थानां निरुक्तसप्तमध्येऽन्तर्भावनिरूपणानन्तरमित्यर्थः। विधिः= विध्यर्थः। निरूप्यत इति। मत्समवेतकृतिजन्यो यो व्यापारस्तज्जन्यज्ञानविषयतावानित्यर्थः। प्रयत्नेति। प्रयत्नः=प्रवृत्तिस्तज्जनकीभूता या चिकीर्षा तज्जनकं यज्ज्ञानं कृतिसाध्यत्वज्ञानं, बलवदनिष्टाननुबन्धित्वज्ञानं; इष्टसाधनताज्ञानं च, तद्विषयीभूतं कृतिसाध्यत्वं, बलवदनिष्टाननुबन्धित्वं, इष्ट-

दीपिका

कृतिसाध्ये प्रवृत्तिदर्शनात् कृतिसाध्यताज्ञानं प्रवर्त्तकम्। न च विष-भक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले,–विहितकालजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्ति-

विवृतिः

साधनत्वञ्च। विधिः = विध्यर्थं इत्यर्थः। तत्प्रतिपादकः = पूर्वोक्तकृतिसा-ध्यतादिविषयकशाब्दानुभवजनकः। लिङ्गादिरिति। आदिपदाल्लट्—लोडादिपरिग्रहः। वाकारेण तेषामेव प्रत्ययानाम् विधिशब्दप्रतिपाद्यत्वं सूचितम्। गुरुमतं दूषयितुमुपन्यस्यति—कृत्येति। कृतिसाध्यत्वप्रकारक-ज्ञानाऽविषयीभूते चन्द्रमण्डलाऽनयनादावित्यर्थः। प्रवृत्त्यदर्शनात् = प्रवृ-त्त्यनुत्पादस्यानुभविकत्वाद्। कृतिसाध्ये = कृतिसाध्यत्वप्रकारकज्ञानविष-यीभूते घटपटाद्यानयनादौ। प्रवृत्तिदर्शनात् = प्रवृत्त्युत्पादस्यानुभवि-कत्वात्। कृतिसाध्यताज्ञानं = चिकीर्षाजनकं कृतिसाध्यताज्ञानं। प्रव-र्तकं = प्रवृत्तिजनकं। तथा च कृतिसाध्यत्वमेव विध्यर्थं इति भावः। नन्वेवं विषभक्षणस्यापि कृतिसाध्यतया तत्र प्रवृत्त्यापत्तिरित्याशङ्कते—न चेति। उत्तरयति—इष्टेति। इष्टसाधनता एव लिङ्गं हेतुरनुमापकं यत्र कृतिसाध्यताज्ञाने तादृशकृतिसाध्यताज्ञानस्य काम्ययागादिस्थले 'प्रवर्तकत्वादि'ति—परेणान्वयः, तथा च विषभक्षणे यत्कृतिसाध्यता-ज्ञानं तन्नेष्टसाधनतालिङ्गकं, विषभक्षणस्येष्टसाधनत्वाभावात्, यच्च-मत्कृतिं विनाऽनुत्पद्यमानत्वे सति मदिष्टसाधनं तदेव कृतिसाध्यमि'त्या-कारकाऽनुमितिरूपस्य कृतिसाध्यताया ज्ञानस्यैव प्रवर्तकत्वमिति भावः॥ ननु सन्ध्यावन्दनादिरूपे नित्ये कर्मणि प्रवृत्तिर्न स्यात् तत्रेष्टसाधनत्वाभावेन इष्टसाधनतालिंगककृतिसाध्यताज्ञानविरहादित्यत आह—विहितेति। 'सन्ध्यावन्दनादौ विहितो यः कालस्तादृशकालावच्छेदेन शूचिजीवित्ववानह-मि'त्याकारकज्ञानजन्यकृतिसाध्यताज्ञानस्य नित्ये सन्ध्यावन्दनादौ प्रवर्त-

दीपिका

कस्थले,–प्रवर्त्तकत्वात्। न चाननुगमः। स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्यानुगतत्वात् इति–गुरवः। तत्र। लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात्। न च

विवृतिः

कत्वात्, नैमित्तिके च स्नानदानादौ तत्तन्निमित्तज्ञानाधीनकृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वादित्यर्थः।

ननु विभिन्नकृतिसाध्यताज्ञानस्य हेतुत्वेऽननुगम इत्यत आह–न चेति। अस्य अननुगम इत्यनेनान्वयः। कुतो नाननुगम इत्यत आह—स्वविशेषणेति। स्वं=प्रवृत्त्याश्रयत्वेनाभिमतः पुरुषः, तस्य यत् विशेषणं=काम्यस्थले यत् स्वर्गादिसाधनीभूतयागादिसाधनं, तद्वत्ताप्रतिसन्धानं=तद्वानहमित्याकारकज्ञानं, तज्जन्यत्वस्य, नित्यादिस्थले च तत्तत्कालीनशूचिनिमित्तादिरूपविशेषणं तद्वत्ताज्ञानात्मकं=यदहमपि शूच्यादिमानित्याकारकं ज्ञानं तज्जन्यत्वस्येत्यर्थः। अनुगतत्वात्=सकलकृतिसाध्यताज्ञानसाधारणत्वात्। तथा च विशेषणत्वेन तादृशयागादिसाधनादेरनुगम इति भावः। गुरवः=प्रभाकराः, वदन्तीति शेषः। दूषयति–तन्नेति। लाघवेनेति। तादृशविशेषणवत्ताज्ञानजन्यत्वेन कृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वे जन्यतायास्तद्धटकजनकतायाश्च कारणतावच्छेदककोटिप्रविष्टतया तदपेक्षया कृतिसाध्यताविशिष्टेष्टसाधनत्वज्ञानस्य हेतुत्वे कारणतावच्छेदकलाघवेनेत्यर्थः कृतिसाध्येष्टसाधनत्वज्ञानस्यैव = कृतिसाध्यताविशिष्टेष्टसाधनताज्ञानस्यैव। 'एवकारेण–तादृशकृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वव्यवच्छेदः'। चिकीर्षाद्वारा = चिकीर्षामुत्पाद्य। प्रयत्नजनकत्वात् = प्रवृत्तिजनकत्वात्। तथा च प्रथमं कृतिसाध्यताविशिष्टेष्टसाधनताज्ञानं, ततश्चिकीर्षा ततः प्रयत्न इति भावः। संध्यावन्दनादिरूपनित्यस्य कृतिसाध्यत्वेऽपि तत्रेष्टसाधनत्वाभावात् विशिष्टज्ञानविरहेण कथं तत्र प्रवृत्तिरित्याशङ्कते—न चेति।

## दीपिका

नित्ये इष्टसाधनत्वाभावात् अप्रवृत्तिप्रसङ्गः। तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात्। तस्मात् कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः॥

ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत'—इत्यत्र लिङा स्वर्गसाधनकार्य्यं प्रतीयते, यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायिकार्य्यमपूर्वमेव लिङाद्यर्थः।

## विवृतिः

नित्यस्याऽप्रवृत्तिप्रसङ्ग इत्यनेनान्वयः। समाधानमाह—तत्रापीति। नित्यस्थलेऽपीत्यर्थः। प्रत्यवायपरिहारस्य = प्रत्यवायविनाशात्मकस्य। कल्पनादिति। तथा च सन्ध्यावन्दनं कृतिसाध्यत्वविशिष्टपापक्षयरूपेष्टसाधनत्ववदित्याकारकज्ञानमेव तत्र प्रवृत्तिजनकमिति भावः। न्यायमतमुपसंहरति—तस्मादिति। लिङाद्यर्थः = लिङादिप्रतिपाद्योऽर्थः। आदिपदाल्लट्-लोडादिपरिग्रहः। पुनः शङ्कते—नन्विति। इत्यत्र=एतस्मिन् वाक्ये। घटकत्वं सप्तम्यर्थः। तथा चैतद्वाक्यघटकीभूतलिङा = लिङ्प्रत्ययेनेत्यर्थः। स्वर्गसाधनकार्यं = स्वर्गस्य साक्षात्कारणीभूतङ्कार्यमपूर्वमिति यावत्। प्रतीयत इति। शाब्दबोधविषयीभूतं भवतीत्यर्थः। ननु यागस्य स्वर्गसाधनत्वसम्भवेऽपूर्वं न विध्यर्थ इत्यत आह—आशुतरेति। चिरध्वस्तस्येत्यर्थः, तथा च स्वर्गान्यथानुपपत्त्यैवापूर्वं विधिशक्तिरवश्यमङ्गीकर्तव्येति हृदयम्। कालान्तरेति। यागविरहकालोत्पन्नस्य स्वर्गस्य कारणत्वं न यागस्य सम्भवति कार्यनियतपूर्ववर्तिन एव कारणत्वादिति भावः। तद्योग्यं = स्वर्गसाक्षात्कारणीभूतं। स्थायि कार्य्यं = स्वर्गरूपफलाऽव्यवहितपूर्वकालस्थायि कार्यम्। अपूर्वम् = अदृष्टम्। लिङाद्यर्थ इति। लिङ्सामान्यस्यार्थ इत्यर्थः। शाब्दस्वरूपं प्रदर्शयितुं भूमिकामारचयति।

दीपिका

कार्य्यं = कृतिसाध्यम् । कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति, 'कस्य कार्य्यम्' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयाऽन्वेति । कार्य्यबोद्धा = नियोज्यः । तेन 'ज्योतिष्टोमनामकयागविषयं स्वर्गकामस्य कार्य्यम्'—इति वाक्यार्थः सम्पद्यते । वैदिकलिङ्त्वात्, 'यावज्जीवमग्निहोत्रं जुहुयात्'

विवृतिः

कार्यमित्यादि । कृतिसाध्यं = प्रयत्नसाध्यं, प्रयत्नप्रयोज्यमिति यावत् । कृतेः = प्रयत्नस्य । सविषयत्वात् = विषयेण सह वर्तमानत्वात् । विषयाकांक्षायां=विषयजिज्ञासायां । विषयत्वेन = विषयितासम्बन्धेन । कार्यपदार्थैकदेशे कृतावन्वेति । कस्य कार्यं=कस्य पुरुषस्य कृतिसाध्यं कार्य्यं, इति = इत्याकारिकायां नियोज्याकांक्षायां = तादृशकृत्याश्रयीभूतपुरुषजिज्ञासायाम् । स्वर्गकामपदमिति । तादृशाकाङ्क्षानिवृत्त्यर्थमित्यादिः । नियोज्यपरतया=तादृशकृत्याश्रयत्वेनेच्छाविशेष्यतया । अन्वेति = पदार्थान्तरनिष्ठविषयतानिरूपितविषयतायाः प्रयोजकं भवति । कार्यबोद्धा=कार्यताज्ञानवान् । नियोज्यः=यागकर्ता । तेन='ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवाक्यघटकीभूतपदानां निरुक्तार्थकरणेन । ज्योतीति । ज्योतिष्टोमनामकयागविषयकप्रयत्नसाध्यं स्वर्गकामस्य कार्यमपूर्वमित्यर्थः । इतिवाक्यार्थः=इत्याकारकः पूर्वोक्तवाक्याधीनः शाब्दबोधः । वैदिकलिङ्प्रत्ययमात्रस्यैवापूर्वबोधकतया, नित्ये फलाभावेऽपि फलानुत्पादकमपूर्वमेव तत्र लिङर्थ इति वैदिकलिङ्त्वेनापूर्वबोधकत्वं न व्यभिचरतीत्याह—वैदिकेति । तथा च 'जुहुयादि'त्यत्र हुधातूत्तरलिङ्प्रत्ययस्य वैदिकलिङ्प्रत्ययत्वादपूर्वबोधकत्वम् अवश्यं स्वीकरणीयमिति भावः । वस्तुतः प्रत्यवायाभावस्यैवाग्निहोत्रादेः फलतया निरुक्तवाक्यघटकीभूतलिङ्प्रत्ययस्याऽपूर्वबोधकत्वं निराबाधमेवेति ध्येयम् । ननु लिङः कार्यबोधकत्वं न सयुक्तिकं 'आरोग्यकामो

दीपिका

इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं कल्प्यते। 'आरोग्यकामो भेषजपानं कुर्यात्' इत्यादि लौकिकलिङः क्रियाकार्ये लक्षणा इति चेन्न। यागस्याप्ययोग्यतानिश्चयाभावेन साधनतया प्रतीत्यनन्तरं निर्वाहार्थम् अवान्तरव्यापारतयाऽपूर्वकल्पनात्। कीर्त्तनादिना नाशश्रुतेर्न यागध्वंसो व्यापारः, लोकव्युत्पत्तिबलात् क्रियायामेव

विवृतिः

भेषजपानं कुर्या'दित्यत्र लिङाऽपूर्वबोधानुदयादित्यत आह—आरोग्येति। इत्यादिलौकिकलिङः = इत्यादिवाक्यघटकीभूतलौकिकलिङः। क्रियेति। धात्वर्थीभूता या क्रिया तन्निष्ठं यत्कार्यत्वं तदवच्छिन्ने इत्यर्थः-लक्षणेति। शक्त्या तादृशार्थविषयकबोधानुदयादिति हृदयम्। तथा च 'भेषजपानमारोग्यकामस्य कार्यमि'त्याकारमन्वयबोधस्तादृशवाक्यादुत्पद्यत इति भावः। दूषयति—नेति। यागस्यापीति। यागः स्वर्गसाधनमित्याकारकनिश्चयाभावेनेत्यर्थः। साधनतया प्रतीत्यनन्तरं = यागः स्वर्गसाधनमित्याकारकज्ञानानन्तरम्। निर्वाहार्थं = आशुविनाशिनो यागस्य स्वर्गकारणत्वनिर्वाहार्थम्। अवान्तरव्यापारतया = अतिरिक्तसाक्षात्स्वर्गकारणतया। अपूर्वकल्पनात् = अदृष्टकल्पनात्। ननु यागध्वंस एव स्वर्गजनकव्यापारोऽस्तु कृतमपूर्वकल्पनया, न च स्वर्गधाराऽऽपत्तिः, तत्तत्कालादेस्तादृशध्वंससहकारित्वोपगमादेव तादृशापत्तिवारणसम्भवादित्यत आह-कीर्त्तनादिनेति। मया बहुतरपुण्यजनकं कर्म कृतमित्याकारककीर्त्तनादिनेत्यर्थः। नाशश्रुतेः = धर्मनाशश्रुतेः। नेति। धर्मविनाशे स्वर्गानुत्पादस्य सर्ववादिसिद्धतया यागध्वंसस्य व्यापारत्वे तादृशव्यापाररूपकारणसत्त्वेन स्वर्गापत्तिः स्यादतो यागध्वंसो न व्यापार इति भावः। न च तत्तत्कालादेः सहकारित्वान्नेयमापत्तिरिति वाच्यम्। तथा सति गौरवादिति तु विभावनीयम्। न्यायमतमुपसंहति-लोकेति। लोकानां=साधारणलोकानां या व्युत्पत्तिः=शक्तिस्तद्बलात्= तज्ज्ञानादित्यर्थः। क्रियायामेव = धात्वर्थ एव। कृतिसाध्येष्टसाधनत्वं =

दीपिका

कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम्, आख्यातत्वेन यत्नार्थकत्वम् । 'पचति' = 'पाकं करोती'ति विवरणदर्शनात्, किं करोतीति–प्रश्ने 'पचती'त्युत्तरात्, चाख्यातस्य प्रयत्नार्थकत्वनिश्चयात् ॥

'रथो गच्छती'त्यादौ–अनुकूलव्यापारे लक्षणा । 'देवदत्तः

विवृतिः

कृतिसाध्यत्वविशिष्टेष्टसाधनत्वम् । लिङा = लिङ्प्रत्ययेन । बोध्यते = शाब्दबोधविषयीभूतं भवति । इति = लिङ्प्रत्ययशक्तिग्रहेण निरुक्तशाब्दबोधजननाद्धेतोः । लिङ्त्वेन = लिङ्प्रत्ययत्वेन । विध्यर्थकत्वं = कृतिसाध्यत्वविशिष्टेष्टसाधनत्वरूपविध्यर्थवाचकत्वम् । आख्यातत्वेन = आख्यातत्वरूपसामान्यधर्मविशिष्टत्वेन । यत्नार्थकत्वं = कृतिरूपप्रयत्नवाचकत्वम्, लिङ इति शेषः । तथा च तादृशविध्यर्थवाचकतावच्छेदकं लिङ्त्वं प्रयत्नवाचकतावच्छेदकञ्चाख्यातत्वमिति भावः। न्यायमते 'स्वर्गकामो यजेत' इत्यादि–वाक्यात्तु कृतिसाध्येष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इत्याकारकः शाब्दबोधो बोद्धव्यः ॥ नन्वाख्यातसामान्यस्य यत्नार्थकत्वे किं मानमित्यत आह–पचतीति । तथा च विवरणादेवाऽऽख्यातसामान्यस्य प्रयत्नवाचकतानिश्चय इति भावः । आख्यातस्य यत्नार्थकत्वे युक्त्यन्तरमप्याह—किमिति । प्रश्ने=जिज्ञासाबोधकवाक्यप्रयोगे । पचतीत्युत्तराच्च = पचतीत्याद्युत्तरवाक्यस्य सर्वानुभवसिद्धत्वाच्च । प्रयत्नार्थकत्वनिश्चयात्=प्रयत्नवाचकतानिश्चयात् । तथा च पचतीत्युत्तरवाक्यघटकीभूताख्यातेन यदि प्रयत्नबोधो न स्यात् तदा पूर्वोक्तप्रश्नबोध्यजिज्ञासाया निवृत्तिरेव न स्यात्, विषयसिद्धेरेव जिज्ञासानिवर्त्तकत्वादिति भावः । नन्वेवं आख्यातस्य यत्नवाचकत्वे 'रथो गच्छती'त्यादौ शाब्दबोधो न स्यात् गमधातूत्तराख्यातवाच्ययत्नस्य रथे बाधादित्यत आह–रथेति । अनुकूलव्यापारे = जनकत्वविशिष्टव्या-

## दीपिका

पचति, देवदत्तेन पच्यते तण्डुल' इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम्, किन्तु तद्गतैकत्वादीनामेव, तयोराक्षेपादेव लाभः।

'प्रजयती'त्यादौ धातोरेव प्रकर्षे शक्तिः, उपसर्गाणां द्योतकत्वमेव, न तु तत्र शक्तिरस्ति॥

## विवृतिः

पारे तदेकदेशे जनकत्वे धात्वर्थीभूतगमनस्यान्वयात् 'गमनानुकूलव्यापारवान् रथ' इत्याकारकः शाब्दबोधः पर्यवसित इति वदन्ति। वस्तुतस्तु व्यापारमात्र एवाख्यातस्य लक्षणा अनुकूलत्वसम्बन्धेन तत्र गमनस्यान्वयादेव पूर्वोक्तशाब्दबोधः सम्पादनीय इति तु तत्त्वम्। कर्तृविहिताख्यातस्य कर्तृरूपोऽर्थः कर्मविहितस्य तस्य कर्मस्वरूपः, कर्त्रा, कर्मणा च सह तादृशाख्यातार्थस्य यथायथमभेदेनान्वय इति यन्मतं तत्रानिर्भरमाह–देवदत्त इति। इत्यादौ= इत्यादिवाक्यस्थले। कर्तृकर्मणोरित्यादि। यथाक्रमं देवदत्तः पचतीत्यादौ देवदत्तरूपकर्तुः, देवदत्तेन पच्यते तण्डुल इत्यादौ तण्डुलरूपकर्मणश्च नाख्यातवाच्यत्वं गौरवादित्यर्थः। नन्वेवं कर्त्रादेरनभिहितत्वे देवदत्तपदोत्तरं तृतीया, तण्डुलपदोत्तरञ्च द्वितीया स्यादत आह–किन्त्विति। तद्गतैकत्वादीनामेव= कर्तृकर्मगतैकत्वादीनामेव। आख्यातार्थत्वमिति पूर्वेणान्वयः। एवकारेण कर्तुः कर्मणश्चाख्यातार्थत्वव्यवच्छेदः। तथा चाख्यातार्थसंख्यानन्वितार्थकत्वमेव तृतीयान्ततायाः द्वितीयान्ततायाश्च प्रयोजकतया न निरुक्तदेवदत्तादिपदोत्तरं तृतीयाद्यापत्तिस्तत्राऽऽख्यातार्थसंख्यान्वितार्थकत्वस्यैव सत्त्वादिति भावः।

तयोः= कर्तृकर्मणोः आक्षेपादेव= आख्यातार्थसंख्यान्वितार्थकप्रथमान्तपदोपस्थाप्यत्वादेव। तथा चान्यलभ्ये शक्त्ययोगान्न कर्ता न वा कर्माख्यातार्थ इति भावः। उपसर्गाणां निरर्थकत्वमाह–प्रजयतीत्यादाविति। प्रकर्षे= प्रकर्षावच्छिन्नजये, प्रकृष्टे जये इति यावत्। ननु तर्हि प्रपदं

दीपिका

पदार्थज्ञानस्य परमप्रयोजनं मोक्षः, तथा हि—'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या श्रवणादीनां तत्त्वसाक्षात्कारे हेतुत्वबोधनात्। श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसम्भावनानिवृत्तेः युक्त्यनुसन्धानरूपमननसाध्यत्वात्। मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम्।

विवृतिः

विनाऽपि जयतेः प्रकृष्टजयार्थकत्वं स्यादत आह—उपसर्गाणामिति। तथा च निरुक्तोपसर्गोत्तरजयतेरेव तादृशार्थकत्वमिति भावः। तत्र = प्रकर्षे. इत्यलं पल्लवितेन ॥

पदार्थतत्त्वज्ञानस्य मोक्षसाधनत्वं प्रदर्श्य मोक्षस्वरूपमपि प्रदर्शयति पदार्थेति। पदार्थतत्त्वज्ञानस्येत्यर्थः। परमप्रयोजनं = परमपुरुषार्थः। प्रथमं मुमुक्षोः शब्दादात्मविषयको बोधस्ततस्तद्विषयकानुमितिस्तदनन्तरं निदिध्यासनं ततश्चात्मसाक्षात्कारस्ततो मिथ्याज्ञानादिविनाशादिना चरमदुःखध्वंसस्वरूपो मोक्षः, अत एव मोक्षसाधनताबोधकदृशादिधातूत्तरतव्यप्रत्ययस्य साधुत्वमप्युपयुज्यते इत्याह—तथाहीति। श्रवणादीनां=शाब्दबोधादीनां। तत्त्वसाक्षात्कारे = आत्मतत्त्वसाक्षात्कारे। हेतुत्वेति। तथा चात्मतत्त्वसाक्षात्कारद्वारा श्रवणादीनां मोक्षसाधनत्वं श्रुत्यैव सम्भवतीति भावः। श्रुत्या = निरुक्तश्रुत्या। देहादिविलक्षणात्मज्ञाने = देहाद्यतिरिक्तत्वेनात्मज्ञाने। असम्भावनानिवृत्तेः = अप्रामाण्यज्ञानानिवृत्तेः। युक्त्येति। युक्तिप्रयोज्यं यदनुसन्धानं = आत्मेतरभेदनिश्चयः तदात्मकानुमितिप्रयोज्यत्वात्। पूर्वोक्तनिवृत्तेरित्यर्थः। मननोपयोगिपदार्थनिरूपणद्वारा = अनुमितेः प्रयोजकीभूतं यत् पदार्थज्ञानं तदनुकूलव्यापारद्वारा। शास्त्रस्यापि = न्यायशास्त्रस्यापि। मोक्षोपयोगित्वं=परम्परया मोक्षप्रयोजकत्वम्। एतदेव

दीपिका

तदनन्तरं श्रुत्योपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति देहादौ अहमभिमानरूपमिथ्याज्ञाननाशे सति दोषाभावात् प्रवृत्त्यभावे धर्माधर्मयोरभावाज्जन्माभावे पूर्वधर्माधर्मयोरनुभवेन नाशे चरमदुःखध्वंसरूपो मोक्षो जायते। ज्ञानमेव मोक्षसाधनम्। मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वात्। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति साधनान्तरनिषेधाच्च।

विवृतिः

द्रढयति-तदनन्तरमिति। शास्त्रेणानुमित्युपयोगिपदार्थनिरूपणानन्तरमित्यर्थः। श्रुत्योपदिष्टयोगविधिना = श्रुतिप्रतिपाद्येन्द्रियसंयमात्मकयोगविधिना। तदनन्तरं = निदिध्यासनानन्तरम्। देहादिविलक्षणात्मसाक्षात्कारे = देहादिभिन्नत्वेनात्मसाक्षात्कारे। अहमभिमानरूपमिथ्याज्ञाननाशे = अहं गौरः कृष्णो वेत्याकारकभ्रमात्मकज्ञानस्य विनाशे। दोषाभावात् = धर्माधर्मजनकेच्छाद्यभावात्। प्रवृत्त्यभावे = धर्माधर्मयोरभावे। जन्माभावे = विशिष्टशरीरसम्बन्धाभावे। धर्माधर्मयोः = धर्माधर्मजनककर्मणोः। चरमेति। चरमत्वमात्यन्तिकत्वं, तच्चाभिहितं प्राक्।

नन्वेवं 'तमेव विदित्वे'त्यादिश्रुत्या ज्ञानस्यैव मोक्षसाधनत्वावगमात् तदकथनेन न्यूनत्वमत आह—ज्ञानमेवेति। ईश्वरादिज्ञानमित्यर्थः। मोक्षसाधनं = मोक्षप्रयोजकम्। कुत इत्याकाङ्क्षायामाह—मिथ्येति। भ्रमनिवृत्तौ तत्त्वावधारणस्य प्रयोजकत्वादित्याशयः, ज्ञानस्य मोक्षहेतुत्वे श्रुतिमपि प्रमाणयति = तमेवेति। परमात्मानमेवेत्यर्थः। अतिमृत्युम् = मोक्षम्। अयनाय = मोक्षाय। इति = इत्याकारकश्रुतितः। साधनान्तरनिषेधात् = ज्ञानाऽतिरिक्तसाधनान्तरनिषेधात्॥ शङ्कते—नन्विति। तदिति। तस्य = मोक्षस्य, या प्राप्तिः = स्वात्मनि सम्बन्धः, तत्र कारणं

कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥

दीपिका

ननु 'तत्प्राप्तिहेतु विज्ञानं कर्म चोक्तं महामुने' इति कर्मणोऽपि मोक्षसाधनत्वश्रवणात् ज्ञानकर्मणोः समुच्चय इति चेत्, न, 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्। ज्ञानं च विमलीकुर्वन् अभ्यासेन च पाचयेत्। अभ्यासात् पक्वविज्ञानं कैवल्यं लभते नरः'। इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात्, ज्ञानद्वारैव कर्म मोक्षसाधनम्, न साक्षात्, तस्मात् पदार्थज्ञानस्य मोक्षः परमप्रयोजनम् इत्येव रमणीयमिति ।

❀ इति श्रीमदन्नम्भट्टोपाध्यायविरचिता तर्कसंग्रहदीपिका समाप्ता ❀

---

विवृतिः

यथा विज्ञानं तथा कर्म चोक्तमित्यर्थः । इति=इत्याकारकवाक्यात् । मोक्षसाधनत्वश्रवणात् = मोक्षसाधनत्वस्य शाब्दबोधात् ॥ समुच्चय इति । तथा च ज्ञानकर्मणोरुभयोरपि मोक्षहेतुत्वं वक्तव्यमित्याक्षेपकर्तुरभिप्राय इति भावः। उत्तरयति- नेति। कर्मणो मोक्षजनकविज्ञानप्रयोजकत्वं दर्शयितुं क्रममाह—नित्येति । दुरितक्षयं=पापक्षयम् । विमलीकुर्वन् = अप्रामाण्यज्ञानाऽनास्कन्दितं कुर्वन् । अभ्यासेन=वैराग्येण । कैवल्यम् = मुक्तिम् । इत्यादिनेत्यत्राऽऽदिना—'ज्ञानाग्निः सर्वकर्माणी'त्यादिपरिग्रहः ॥ कर्मणो ज्ञानोत्पादकतयैव मोक्षसाधनत्वं न तु साक्षादित्याह—ज्ञानद्वारेवेति । न साक्षात् = न ज्ञानमनुत्पाद्य ॥ उपसंहरति—तस्मादिति । मोक्षः=मोक्ष एव । रमणीयमिति । न्यायमतमिति । शेषः ॥

७२८ ✓

(१) श्रीमद्विश्वविख्यात-नैयायिकधुरन्धर–तर्कतीर्थ–न्यायाचार्य–श्रीवामाचरणभट्टाचार्यविरचितविवृत्युपेतसिद्धान्त–लक्षण–तर्कसंग्रहयोः—

(२) श्रीमत्प्रसिद्धसाहित्यतीर्थ–जानकीनाथभट्टाचार्यविरचितव्याख्योपेत–किरातार्जुनीयस्य च—प्राप्तिस्थानम्—

(१) श्रीवामाचरणभट्टाचार्यः,

नं०—९, अहल्याबाई ब्रह्मपुरी, काशी।

(२) मास्टर—खेलाड़ीलाल एन्ड सन्स,

कचौड़ी गली, बनारस।